लीलाकन्तुं श्रितमतितरामत्यजन्तं वा वदन्तम् ॥ ४२ ॥

भावैस्तस्य स्वभावैरनमिताः कृतानुमाना या बलवत्यो मद्वियोगव्यथा

दृग्युग्मं वा निमिषविमुखं सान्द्रबाष्पायमाणम् ।
मां मुक्त्वान्तःकरणमिव धीः प्रस्थिताक्वासि बाले !

यन्तम् ॥ ४२ ॥

तीव्रेति । अथवा निमिषविमुखं निमीलनरहितं, निमिषोऽक्षिस्पन्द-काले चक्षुर्निमीलने पुमानिति शब्दार्णवः । तथा सान्द्रं निरन्तरं बाष्प-मश्रुबिन्दुमुद्वमतीति सान्द्रबाष्पायमाणम् । बाष्पोष्मफेनधूमादुद्वमने इति

मद्विरहदुःखानि, पीड़ा बाधा व्यथा दुःखमित्यमरः । ताभिर्हेतुभिरित-स्ततो भ्रामं भ्रामं पुनः पुनर्भ्रान्त्वा इमां मामनासाद्य अप्राप्य रत्नापायात् रत्नस्य शिरोमणेरपायात् अपगमात् विषधरं भुजङ्गमिव नूनमवश्यं अन्त-स्तापं अन्तर्गतसन्तापं कथयता प्रकाशयतेव उष्णवतामुष्णानां श्वासानां भन्ना मद्विम्ना सह स्वाङ्गं हस्तपादादिकं पक्षे भोगं आस्फालयन्तं ताड़-

निर्गमनमार्गमिव, द्वारं पुनर्निगमनेऽभ्युपाये इति विश्वः । दर्शयन्तं लोकानालोकयन्तम् । अथवा हे बाले ! धीर्बुद्धिरन्तःकरणमिव अति-तरामतिशयेन श्रितं सेवितं पक्षे नित्यसम्बद्धं मां मुक्त्वा लीलाकन्तुं चञ्चलयितुं त्वं क्व प्रस्थितासि बहिरन्तःकरणं मुक्त्वा प्रतिष्ठमाना चञ्चली-युगलं, चक्षुरक्षिणी । दृग्दृष्टी चेत्यमरः । तीव्रेण एकान्तेन उत्तापेन शोकसन्तापेन द्रुततरस्य अतिशयेन विलीनस्य द्रवीभूतस्येति यावत्. द्रुतं त्रिपु । शीघ्रे विलीने विद्राणे इति मेदिनी । मनसो द्वारवत्

एषेदानीं स्वयमहृत सा दुर्विनीतं कबन्धं
प्रायो धर्मात् स्खलति हि जनः सर्वसम्पद्व्यपाये ॥२५॥
तत्पूर्वस्यां दिशि कतिपयैः पद्भिरासादनीयं
धर्मक्रीड़ावनमिव जनस्थाननाम्ना प्रतीतम्।
धर्मारण्यं प्रविश च तथा तत्र सम्भुञ्जयेथा
हुत्या वह्निं स हि वहति वो हव्यमिज्याधनेभ्यः ॥२६॥

हिताम्बतया चौरत्वेनाभिशप्यमानस्य कपिलमहर्षेः शापेन विप्लुष्टा इति च रामायणप्रसिद्धं गौरवभयान्नात्रलिखितम् ॥ २४ ॥

तं प्रदेशं परिचाययति भूतेति। भूतानां प्राणिनाम्। युक्ते क्ष्मादावृतं भूतं प्राण्यतीते समेतिष्वित्यमरः। उत्पीड़ाविधिषु हिंसाकर्मसु न तु भूतेष्वित्यर्थः। नितरामेकान्ततो दत्तो हिंसाया अवकाशोऽवस्थानयोग्यस्थानं यैः स्वैर्हिंसां द्विषद्भिरित्यर्थः। मुनिवरैर्महर्षिभिर्लब्धा अधिगता या किल भूमिरद्वितीया असदृशी पुण्यानि सूत इति पुण्यसूः पुण्यप्रसवकारिणी आसीत्। पुरा किल महर्षयस्तामेव भूमिमधिवसन्तिस्म शुक्रशापेन धक्ष्यमाणां तां निश्चित्य परं जनस्थानमाश्रितवन्त इति तदानीमस्या अद्वितीयपुण्यमूलमासीत्। सा एषा इदानीं दुर्विनीतं दुराचारं कबन्धं राक्षसविशेषम्। कबन्धो राक्षसान्तरे इति विश्वः। स्वयमहृतः स्वयं वृतवती। अत प्राङ्मुनीनामिदानीं हिंस्रस्य कबन्धस्य परिग्रहणं ध्वन्यते। अर्थान्तरं न्यस्यति हि यस्मात् जनः सर्वसम्पदां सफलसम्पत्तीनां व्यपाये अपगमे प्रायो बाहुल्यात् प्रायो भूम्न्यन्तगमने इत्यमरः। धर्मात् स्खलति भ्रश्यति। ज्ञानजाने ममापि का गतिः स्यादित्याभिप्रायिकी आशङ्का बोध्या ॥ २५ ॥

तदिति। तस्या दण्डकारण्यभूमेः पूर्वस्यां दिशि कतिपयैः पद्भिः कतिभिरपि पादैः। पाददन्तेति पदादेशः। असादनीयं प्राप्यं तथा धर्मस्य क्रीड़ावनं क्रीड़ार्थंवनमिव। नियतमेव यत्र धर्मः

ब्रह्माभ्यासाकुलपटुवटून् स्वस्तरेऽधस्तरूणां
सत्कीराणामुपरिवसतां व्यक्ततत्तद्वचोक्तिः ।
यस्मिन् शास्ति स्खलितमसकृद्बोधयन्ती स्वराणां
जुह्वान् वृद्धप्रचलितगुणा गायनान् वल्लकीव ॥ २७ ॥

क्रीडतीति भावः । तथा जनस्थाननाम्ना जनस्थानेति नाम्ना प्रतीतं ख्यातम् । प्रतीते प्रथितख्यात वित्तविज्ञातविश्रुता इत्यमरः । धर्मारण्यं धर्मप्रधानमरण्यं वनं प्रविश्य तथा तत्र धर्मारण्ये इज्या यागः । यजधातोः शीव्रजयजेति भावे क्यप् । तस्या वह्निं लक्ष्यत्वाद्धितसर्गं मुनीनामिति शेषः । नित्याग्निहोत्रित्वात्तपोधनानाम् । सन्तुचयेषा उद्दीपयेः । हेतुमाह हि यस्मात् स वह्निरिन्धैव धनं येषां ते इज्या धना याजकास्तेभ्यो हव्यम् अग्नौ हुतं हविर्वो युष्मान् वहति प्रापयति । तथा च जातवेदा देवेभ्यो हव्यं वहतीति श्रूयते । दिक्पालहोमादौ मन्त्रोऽपि विहितः । तथा च उपकारीप्रत्युपक्रियेतेति भावः ॥ २६ ॥

ब्रह्मेति ॥ यत्र धर्मारण्ये तरूणां वृक्षाणां उपरिवसतां वर्त्तमानानां सन्तः प्रशस्ताश्च ते कीराः शुकाश्चेति सत्कीरास्तेषाम् । प्रशस्तेऽभ्यर्हितं च सदिति । कीरशुकौ समाविति चामरः । व्यक्ता सुस्पष्टा तत्तत्सद्वचोक्तिः तस्य तस्य वटुभिः पठ्यमानस्य युगपदुक्तिः कर्त्री स्वराणां उदात्तानुदात्तस्वरितानां वीणापक्षे मध्यमादीनाम् । स्वरोऽकारादिसामान्ये मध्यमादिषु च ध्वनौ । उदात्तादिषु च प्रोक्तः स्वरो नाशासमीरणे इति विश्वः । स्खलितमन्यथात्वमसकृत् पदे पदे बोधयन्ती सती अधस्तत्तरूणामधः स्वस्तरे कुशासने ब्रह्मणां देवानाम् । ब्रह्मप्रोक्तं तपोऽध्यात्मवेदज्ञानेषु सूरिभिरिति विश्वः । अभ्यासे आसाने आकुला व्यस्ता ये पटुवटवः अध्ययनचतुरा नवीपनीता ब्रह्मचारिणस्तान् । वटुर्वर्णी ब्रह्मचारीति शब्दरत्नावलौ । यद्वा वटवो बालका बालको मानवो बालः किशरो वटुरित्यपीति शब्दरत्नावली । वृद्धेन निपुणेन प्रचलिता वादिता गुणा यस्याः सा

अत्रैवासीत् सपदि हरता आत्मनेनाधमेन
स्वालीयस्य व्यसनपतितां विह्वलामुज्जिहीर्षोः।
लोकाधृष्यप्रबलबलभृद्भीमसूर्तिर्जटायु-
र्नाम्नोऽशेषद्विजकुलपतेरद्भुतः सम्परायः॥ २८॥

तथोक्ता वल्लकी वीणा। वीणा तु वल्लकीत्यमरः। चुद्रान् अस्यक्कम्बिजितान् गायनानिव शान्ति शिक्षयति। तरूणामधः शिशवो वेदमभ्यस्यन्ति उपरि शुकाद्याजन्मश्रवणात् ज्ञाताभ्यासतया तमेव युगपत् पठन्ति तत्र वटूनां शिक्षमाणतया क्वचित् क्वचित् स्वरस्खलनं जायते शुकास्तु जातनैपुण्यतया यथास्वरमेवोच्चारयन्ति तच्छ्रुत्वा बाला अप्यारूढस्मृतयः पुनर्यथावत् पठन्तीति शुकास्तैरेव तान् शिक्षयति तत्रैवेयमुपमा यत्र निपुणा वीणया असम्यङ्निपुणास्तु स्वरैनैकमेव गायन्ति तत्र वीणैव यथा ज्ञातस्वरव्यत्ययान् गायनान् निजस्वरानुभावनया शान्ति तथा इति निर्गलितार्थः। यत्र श्रुतिमात्रेण शुकानामेव नैपुण्यं तदरण्यं वेदाध्ययनस्य परमं चेत्रमिति भावः॥ २७॥

अत्रैवेति। अत्रैव जनस्थाने सां हरता अनेन अधमेन निकृष्टेन। निकृष्टप्रतिकृष्टार्व्व रेफयाप्यावमाधमा इत्यमरः। रावणेत्यर्थः। सद्य सपदि सद्यएव ग्रहणानतिविलम्ब इति भावः। व्यसने विपदि पतितां वर्त्तमानाम्। व्यसनं विपदि भ्रंश इत्यमरः। तथा विह्वलां विक्लवचेतसं मामिति पूर्वेणानुषङ्गः। उज्जिहीर्षोरुद्धर्त्तुमिच्छोःस्वालीयस्य मम स्वजनभूतस्य। धृष्यमिति दृस्युषेति ऋदुङ्लात् कर्मणि क्यप्। न धृष्यमधृष्यं तस्याः मक्याहे इति शक्यार्थेऽपि स्यप्रत्ययविधानात् परिभवितुमशक्यमित्यर्थः। लोकैरधृष्यं प्रबलबलमति सामर्थ्यं विभर्त्तीति लोकाधृष्यप्रबलबलभृत् सा भीमा भयङ्करी च मूर्त्तिर्यस्य स तथोक्तस्य जटायुर्नाम्नि नाम्ना जटायुषः अशेषाणां सर्व्वेषां द्विजानां पक्षिणां कुलानि गणा अशेषद्विजकुलानि। दन्तविप्राण्डजा द्विजा इत्यमरः। तेषां पत्युरधीश्वरस्य।

चञ्चच्चञ्चुक्षतक्षतगलद्रक्तधाराकुलाङ्गः
पक्षक्षेपप्रखरनखराकर्षणैर्लुप्तसंज्ञः ।
मज्ञाग्न्यान्तान्मृतवदपि स प्राप्तधीः शौर्य्यचण्डः
खड्गैः पिङ्गो दलितगरुतं तत्र तं संजिगाय ॥ २९ ॥

तत्रादूरे वनसतिमहत् पञ्चवट्याख्यनाम्ना
सान्द्रच्छायाजनितरजनीविभ्रमं तत्प्रभेघाः ।
पुष्पश्रेणैरतिसुरभिभिर्नूतनैस्तत्प्रसूतै-
स्तेनापि त्वच्छ्रमलवतनुर्नेष्यते मांसलत्वम् ॥ ३० ॥

ईश्वरः पतिरीशितेत्यमरः । अद्भुतो विस्मयजनकः सम्परायो युद्धमासीत् । युद्धायत्योः सम्पराय इत्यमरः । एतेन वाक्येन त्वांहरन्नसौ रावणो न केनापि निवारित इति वायोः प्रश्नः परिहारितः ॥ २८ ॥

ननु जटायुषा कथं नोद्धृतासीरित्यत आह चञ्चदिति । तत्र युद्धे चञ्चन्त्याः प्रचलन्त्याश्चञ्चोरोष्ठस्य यत् क्षतक्षतं तज्जनितं क्षतक्षतमित्यर्थः तस्मादगलन्तीभिः क्षरन्तीभिः रक्तधाराभिराकुलानि व्यस्तीभूतानि अङ्गानि यस्य स तथोक्तः तथा पक्षयोः क्षेपाश्चाघाताः पक्षक्षेपाः प्रखरनखरैस्तीक्ष्णनखरैराकर्षणानि प्रखरनखराकर्षणानि ते च तानि च तानि तैर्लुप्ता अपगमिता संज्ञा चेतना यस्य स तथोक्तः मोहित इति यावत् स पिङ्गः कामुको रावण इति यावत् । पिङ्गस्तु कामुकेऽपि चेति शब्दाब्धिः । मृतवदपि लुप्ततया गतासुवत्प्रतीयमानोऽपि मज्ञाग्न्यान्तात् मन्नियतिवशात् प्राप्तधीर्लब्धसंज्ञः शौर्य्यचण्डः शौर्य्येण शूरतया चण्डोऽतिकोपनश्च सन् । चण्डस्त्वत्यन्तकोपन इत्यमरः । खड्गैः खड्गाघातैर्दलितगुरुतं खण्डितपक्षम् । गरुत्पक्षच्छदा इत्यमरः । तं जटायुषं संजिगाय जितवान् ॥ २९ ॥

तत्रेति । तत्र जनस्थाने अदूरे निकटे सान्द्रया निरन्तरया छायया

यत्रानेके सततमृषयः साधितब्रह्मतत्त्व-
प्रत्यक्षेणाप्रचलितमनोनिर्वृताः संवसन्ति ।
एकान्तं स्वं जनयितुमिव स्वकृतः पावनत्वं
संरक्षन्ते निखिलतपसा ये पवित्रेषु मुख्याः ॥ ३१ ॥

जनित उत्पादितो रजन्या रात्रे विभ्रमः शोभाऽथवा रजनीविभ्रमो रात्रिभ्रमो येन तत् तथोक्तम् । घनं निरन्तरं सान्द्रमित्यमरः विभ्रमः शृङ्गारभावजातक्रियाविशेषके । भ्रान्तावपि च शोभायामिति शब्दाब्धिः । नाम्ना पञ्चवटी अति महत् सुविस्तीर्णं वनमस्ति त्वं तन्नमेथा प्राप्नुहि तत्र किं स्यादित्यत आह तेनापि वनेन नूनमवश्यातिथ्यभूतैरतिथिसत्कारोपकरणभूतैः । क्रमादातिथ्यातिथेये अतिथ्यर्थे । साधुनीत्यमरः । अतिसुरभिः अतिसुगन्धिभिः सुगन्धौ च मनोज्ञे च वाच्यवत् सुरभिः स्मृत इति विश्वः । पुष्पक्षोदैः पुष्परजोभिः । चोदो रजसि पेषण इति विश्वः । त्वञ्चमलघुतनुः तव श्रमखेदक्षीणशरीरं मांसलत्वं बलवत्त्वं नेष्यते प्रापयिष्यते । बलवान् मांसलोऽंसल इत्यमरः । अत्र नीञो मुख्यकर्मणि कर्मप्रत्ययः ॥ ३० ॥

यत्रानेक इति ॥ यत्र पञ्चवट्यां वने साधितेन आसादितेन ब्रह्मतत्त्वप्रत्यक्षेण आत्मतत्त्वसाक्षात्कारेण हेतुना अप्रचलितेन श्रवणमननादै । सुताचाञ्चल्येन मनसा निर्वृताः सुखिताः । निर्वृतिः सुस्थितावस्तगमने च सुखे स्त्रियामिति मेदिनी । आत्मा वा अरे श्रोतव्यो मन्तव्यो निदिध्यासितव्यः साक्षात् कर्त्तव्यश्चेति श्रुतेरात्म साक्षात्कारार्थमेव श्रवणादौ मनसोऽतिव्यापृततया पुमांसो न सुस्था भवन्ति सति तु तस्मिन् साक्षात्कारे मनोव्यापारविरहात् पुरुषैः सुस्थीयत इति भावः । अनेके ऋषयः सततं संवसन्ति निवसन्ति तन्नमेथा इति पूर्वश्लोकीयेनान्वयः । तमेवं वेदार्थवचनेन ब्राह्मणा विविदिषन्ति ब्रह्मचर्य्येण तपसा दानेन यज्ञेनानशनेन च इति

नानास्थानागतपरिलसन्नारसङ्घातनद्यां
नाथै रम्यैः सह गजघटालोड्यमानान्तरायाम्।
यत्रात्मानं कलकलरवैर्दूरतो बोधयन्त्यां
गोदावर्यां सरिति सुमुचे यात्रयेव स्वभावः॥ ३२॥

स्मृतौ, तपःप्रभृतीनां पापनाशोपायतया निर्देशात् तपस्यतस्तानवेक्ष्य कदाचिदिदं मिथ्याभवेदित्यत आह। एकान्तमित्यादि पवित्रेषु मध्ये मुख्याः श्रेष्ठा ये ऋषयः निखिल तपसा कर्त्ता स्वङ्गतः संसर्गाद्धेतोः स्वमात्मीयमेकान्तं पावनत्वं जनयितुमुत्पादयितुमिव संस्पृश्यन्ते संसृष्टा भवन्ति ते ऋषय इत्यन्वयः। उत्तरवाक्ये यच्छब्दात्। तच्छब्दापेक्षा। अहमेवं मन्ये न ते तपांसि स्पृशन्ति तपोभिरेव स्पृश्यन्त इति भावः। इवोत्प्रेक्षायाम्॥ ३१॥

न केवलं तद्वनस्य धर्म्महेतुत्वं प्रमोदहेतुत्वमपीति दर्शयति नानेति। यत्र पञ्चवट्यां वने नानास्थानेभ्यो दिगन्तेभ्य आगतः परिलसन् शोभमानो यो नारसंघातो नीरसमूहः। नारस्तर्णकनीरयोरिति विश्वः। पक्षे नरस्याय नारः स चासौ संघातश्चेति नारसङ्घातो नरसमूहस्तस्यां तदात्मिकायां तथा रम्यैर्मनोरमैः। रम्यं मनोरम इति विश्वः। नाथैर्यूथपैः पक्षे प्रभुभिः सह गजघटाभिर्हस्तिनां निचयैः। करिणां घटना घटा इत्यमरः। आलोड्यमानमितस्ततो गम्यमानमन्तरं मध्यं यस्याः सा तस्यां तथा कलकलरवैः कलकलेतिध्वनिभिः पक्षे कोलाहलशब्दैः। कोलाहलः कलकल इत्यमरः। करणैर्दूरतो दूरात् आत्मानं बोधयन्त्यां अनुमापयन्त्यां गोदावर्यां गोदावरीनाम्न्यां सरिति तरङ्गिन्यां यात्रया देवार्चनोत्सवेन (यात् इति भाषा प्रसिद्धेन) यात्रा स्यात् यापनोपाये गतौ देवार्चनोत्सवे इति विश्वः। स्वभावो धर्मो मुमुचे मुक्त इव प्रागुक्त विशेषणत्रये श्लेषेण यात्राधर्मप्रदर्शनात् रूपकतेदनुप्रेक्षा॥ ३२॥

दायान्तम् अतिविश्वासवशात् निकटमागच्छन्तं नवोऽचिरभूतो यः पशु-
सभासङ्गः पशूनां सभायां सम्पर्कस्तन्निर्वेदेन तज्जनितात्मावमाननेन ।
— — — — — — — — मिदानीं पशुभिः समं स्थेयमित्येवं रूपेणेति

स्नेहात् सख्या किमिह न विधेऽसह्यत प्राण्यमानः ।
तन्मन्ये हं पशुषु परुषं दैवशब्दाभिधेयं
चाण्डालं त्वामिति मुहुरिमां व्याहरन्तीञ्च पश्ये ॥५४॥

वद्धभावेनैव स्थितामित्यर्थः । — — — — — — —
स्नाक् झटित्यञ्जसाह्नायेत्यमरः । उपेत्य उपगम्य सस्नेहं स्नेहसहितं
यथा स्यात्तथा गात्रे वपुषि पाणिना करेण व्यामृषन्तीं स्पृशन्तीम् ।
वैणिका वीणागुणान् शिथिलयित्वेव कर्म्मान्तरेषु प्रवर्त्तन्ते अत तु
तदकरणनिर्द्देशात् मृगशिशौ स्नेहातिरेकः सूचितः ॥ ५३ ॥
— — — — — — — — — — — — —
यावत् । निर्वेदः स्वावमानन इति शब्दाब्धिः । दीनं कातरम् । दीनामूषिक-
योषायां दुर्गते कातरेऽन्यवदिति विश्वः । मतकृतकतनयं मम कृत्रिम-
पुत्रभूतं मृगपोतम् । कृतकः स्यात् पुमान् कृष्णखर्परे चाप्यसम्भवे । पुत्रभेदे
कृत्रिमे च विश्वेति शब्दाब्धिः । अशिथिला अनमिता गुणा यस्याः सा तां
— — — — — — — — — — — — — झटिति ।
तत् तस्मात् पशुषु परुषं निष्ठुरम् । मातृवियोगफलकादृष्टविशेषस्य
फलानन्तरमेव विरामौचित्येन तदनन्तरमपि आत्मानं स्थापयित्वा
मातृकार्य्यकारिण्यापि जनितविप्रयोगत्वादिति भावः । त्वां दैवशब्दाभि-
सद्य इति । तया हे विधे सद्यःसूतः प्रसूतमात्रो असौ मृगशिशुर्मृगत्व-
शावको मातृरिक्तीकृतः । रिक्तः शून्यः । रिक्तं शून्ये वने इति मेदिनी । तथाच
जनन्या वियुक्तीकृतोपि इह इदानीं स्नेहात् सख्या सीतया प्राण्यमानो
जीव्यमानः किं न असह्यत न सोढः । यतस्त्वयापि वियोजितः इति भावः ।

उद्देशं तं सदय विशता मर्मरैः पत्रकाणां
निद्रामुद्रं चकितचकितं नैव मुन्मीलयन्तः।
नान्विष्यन्तश्चिरपरिचितां व्यर्थसंज्ञास्त्वयैवं
नोपालभ्याः कथमपि मृगा ह्यत्र कर्मैव वाच्यम् ॥३५॥

मलये मलयपर्वत इति मेदिनी। स एव एकप्रियोऽतिवल्लभो येषां तेषां विटपिनां चन्दनवृक्षाणां मण्डलस्य चक्रवाडस्य। चक्रवाडन्तु मण्डलमित्यमरः। अभ्यन्तरस्था मध्यवर्त्तिन उटजाः पर्णशालाः। पर्णशालोटजोऽस्त्रियामित्यमरः। नूनं ते तव द्रष्टव्या दर्शनीयास्तैरुटजैरन्यैर्नाकथितोऽनुपदिष्टोऽपि नोऽस्माकं धामायन्ति निवसन्ति यस्मिन्नित्यावसथो वासस्थानं स्वयमात्मना अनुमेयो अनुमितिविषयो भविष्यति। ३४॥

उद्देशमिति। हे सदय! तम् उद्देशम् आश्रमप्रदेशं विशताप्रविशता त्वया पत्रकाणां पर्णानां मर्मरैः शब्दैर्हेतुभिः अथ मर्मरः स्वनिते वस्त्रपर्णानामित्यमरः। निद्रया मुद्रा मुद्रितभावो यस्य तन्निद्रामुद्रं नेत्रं चकितचकितं भीतभीतं यथा स्यात्तथा। चकितः शङ्किते भीते इति शब्दाब्धिः। उन्मीलयन्तः प्रकाशयन्तो मृगाः चिरपरिचितां बहुतरकालेन जातपरिचयां नान्विष्यन्तोऽन्वेषणमकुर्वाणा अतएव व्यर्थाः निष्प्रयोजना संज्ञा चेतना येषां अथवा व्यर्था अर्थरहिता संज्ञा नाम येषां मृगश्चान्वेष इति मृगशब्देनान्वेषणावगमादिति भावः। संज्ञा स्याच्चेतना नाम हस्ताद्यैश्चार्थसूचना इत्यमरः। ते व्यर्थसंज्ञा एवम् अनेन प्रकारेण कथमपि न उपालभ्या दुर्वचनीयाः। उपालम्भो दुर्वचन इति शब्दाब्धिः। हेतुमाह हि यस्मात् अत्र विषये कर्मैव मम जन्मान्तरीणकर्मैव वाच्यं निन्दनीयं कर्मदोषादेवं जातमिति भावः। अतएवोक्तं स्वकर्मफलभुक् पुमानिति। व्यर्थनामत्वपक्षे अत्र मृगशब्दे कर्मैव वाच्यं न कर्त्तेत्यर्थः।

स्कन्धालम्बैर्धनुरिषुधिभी रचितैर्लब्धसाम्यै
रक्ताशोकैर्दशशतकरं प्राङ्गणाद्वारयद्भिः ।
यन्नावारि द्विदशकरभृत्तेऽत्र नार्हन्ति गर्हां
पादाघातान्मम विटपिनस्ते हि सञ्जातरागाः ॥ ३६ ॥

तथा च मृग्यन्त इति मृगा न मृगयन्तीति। अतस्तत्कर्तृकान्वेषणान्न संज्ञार्थव्याघात इति भावः ॥ ३५ ॥

स्कन्धेति। स्कन्धे शाखावधिप्रदेशे। स्कन्धः स्यान्मूलाच्छाखावधेस्तरोरित्यमरः। आलम्बन्त इति स्कन्धालम्बाः। पचादित्वादच्। तैः। धनूंषि च इषुधयश्च ते तैर्धनुस्तूणैः। तूणोपासङ्गतूणीरनिषङ्गा इषुधिर्द्वयो रित्यमरः। अर्हद्देवररचितैरिति भावः। करणैः। रचन्तीति रचिणस्तैर्लब्धं साम्यं सादृश्यं यैः ते तथोक्तैः रचिणानपि स्कन्धालम्बधनुस्तूणत्वादिति भावः। तथा दशशतानि सहस्रं करा अंशवो यस्य तम् बलिहस्तांशवः करा इत्यमरः। सहस्रांशुमिति यावत्। प्राङ्गणाच्चत्वरात्। अङ्गनञ्चत्वराजिरे इत्यमरः। वारयद्भीरक्ताशोकै रक्ताशोकवृक्षैर्यत् द्विदश विंशति करान् हस्तान् बिभर्त्तीति द्विदशकरभृत् रावणो न अवारि निवारितः। अत्र विषये ते रक्ताशोका गर्हां निन्दां नार्हन्ति निन्दार्हा न भवन्ति तान्न निन्देरिति स्पष्टम् दशशतकरनिवारणसमर्थानां द्विदशकरस्यानिवारणौचित्येन निन्दार्हत्वादिति भावः। तत्कथमनिन्द्यतेत्याह, हि यतः मम पादाघातात् पादताड़नात् ते विटपिनः संजातो रागो रक्तिमा आमूलाद्विकसनादिति भावः। पक्षे रागो मात्सर्यं क्रोधादिति भावः। येषां ते तथोक्ता आसन्निति शेषः। रागः क्लेशादिके रक्ते मात्सर्ये लोहितादिष्विति शाश्वतः। मत्पादाघातोपजातरागाः कथं मामनुकम्पिष्यन्त इति भावः। सुन्दरीणां पादाघातादशोको विकशतीति प्रसिद्धिः। तथाहि "पादाघातादशोको वदनमदिरया केशरः कर्णिकारो लास्यादास्यानिलानां स्फुटति परिचया-

तस्मिन्नङ्गैर्मरकतमणिच्छायमाच्छादयद्भिः
सम्बद्धं तत् तरणिजकुलं तेजसा द्योतयन्तम् ।
वन्यां वृत्तिं सपदि ददतो दित्सिते राज्यभारे
शीर्षेणाज्ञां पितुरिव जटां मुक्तखेदं वहन्तम् ॥ ३७ ॥

सूतकः सुन्दरीणाम्। अङ्गादङ्गात् प्रियङ्गुद्रं वहसितजुषी पारिजाताख्य-चम्पौ गीतालापान्मेहस्तिलककुरवकौ वीक्षणालिङ्गनाभ्यामिति ॥३६॥

अथेदानीं दशभिः श्लोकैरुग्रक्रियादिवर्णनया भर्त्तारं परिचाययति तस्मिन्नित्यादि। तस्मिन्नायने द्रक्ष्यसीति दशमश्लोकीयेनान्वयः। मरकत-मणिर्हरिद्वर्णमणिविशेषः तस्यच्छाया कान्तिर्मरकतमणिच्छायम् छायासू-र्य्यप्रियाकान्तिप्रतिबिम्बमनातप इत्यमरः। षष्ठ्यन्तप्राक्पदा सेनाच्छा-याशालानिशासुरा इत्यमरसंग्रहात् नपुंसकत्वम् तदाच्छादयद्भिर्न्यक् कुर्वद्भिः श्यामलैरित्यर्थः। अङ्गैरवयवैर्द्वारैः सम्बद्धं कृतसम्बन्धं तत् अतिप्रथिततया प्रसिद्धं तरणिजं सूर्य्यसम्भवम्। द्युमणिस्तरणिर्मित्र इत्य-मरः। कुलं वंशं तेजसा दीप्तया, तेजः प्रभावे दीप्तौ चेत्यमरः। द्योत-यन्तमुद्दीपयन्तं विष्णुरूपत्वादस्येति मानसो भावः। सूर्य्यसम्भवत्वेन कुलस्य तेजस्वित्वं प्रतिपादितं तदपि श्यामलाङ्गकृतसम्पर्कतयास्य तेजसा द्योत्यत इति विस्मयनीयता च ध्वन्यते। तथा राज्यभारे दित्सितं दातु-मिष्टे सपदि तत्क्षणे वन्यां वने भवां वृत्तिं जीविकाम आजीवो जीविका वार्त्ता वृत्तिर्वर्त्तनजीवने इत्यमरः। ददतः प्रतिपादयतः वनप्रस्थानादेशा-दिति भावः। पितुर्दशरथस्य आज्ञामिव जटां शीर्षेण मूर्द्ना मुक्तस्त्यक्तः खेदः शोको यस्मिन् तत् यथा स्यात्तथा वहन्तं धारयन्तम्। खेदोऽवसादके पुमान्। आयासशोकयोरिति शब्दाब्धिः। आसन्नराज्यसुखस्य वनवा-सोऽपि न खेदायेति गाम्भीर्य्यमायाम। एतद्विशेषणद्वयं दशमश्लोकीयेन मद्भर्त्तारमित्यनेनान्वेति; एवमुत्तरत्रापि बोध्यम् ॥ ३७ ॥

नासाकर्णस्पृग्नयनयोश्छद्मना सेतुमध्यं
नीलाम्भोजद्वयविलसितं दीर्घकासारमेकम्।
भ्रूव्याजेन स्मरजयि धनुर्लोहितं लोहितिम्ना
नासारन्ध्रादिव विगलता चाधरं धारयन्तम्॥ ३८॥
स्वत्रातस्याप्यखिलजगतो वीच्य पादानुवृत्तिं
सन्दृष्टुं तद्गणगणमिव जानुसंलम्बिताभ्याम्।
क्रूराचारव्यथितजगतां कालदण्डक्रियाभ्यां
दुर्वृत्तानां प्रमथनविधौ भ्राजमानं भुजाभ्याम्॥ ३९॥

नासेति। स्पृशत इति स्पृशे: कृत्स्पृशोज्जुड इति क:। नासाया: कर्णस्य च स्पृशे नासाकर्णस्पृशे ते च ते नयने चेति तयोश्छद्मना व्याजेन। कपटोऽस्त्रीव्याजदम्भोपधयश्छद्मकैतवे इत्यमर:। सेतुर्मध्ये यस्य स तं तथा नीलाम्भोजद्वयस्य विलसितं लीला यत्र स तथोक्तम् एकं दीर्घकासारं दीर्घं सर:,। कासार: सरसी सर इत्यमर:। धारयन्तं विस्तृतं कर्णान्तविश्रान्तयोर्लोचनयोरेकसरस्त्वं नासिकाया: सेतुत्वम् तारकयोर्नीलपद्मत्वं वर्णितं। तथा भ्रूव्याजेन भ्रुवो: कैतवेन मिलितत्वादिति भाव:। स्मरं कामं रूपातिशयेन जयतीति स्मरजयि सति घ्यादेरिन्निति व्याख्यातसूत्रेण इन्। कामाभिभावकमिति यावत् धनुश्चापं धारयन्तं। तथा नासारन्ध्रात् नासिकाविवरात् विगलता क्षरतेव लोहितिम्ना लोहितगुणेन लोहितं रक्तवर्णम्। पूर्ववत् लोहितशब्दात् गुणादिमनभाव इति इमन्। अधरं दशनवसनञ्च धारयन्तम् अधरो दन्तवसने हीने नूर्द्ध्वेऽधरोऽन्यवदिति विश्व:। एतेनाधरो नासान्तरञ्चातिलोहितं स्वाभाविकं वर्णितम्॥ ३८॥

स्वत्रातेति॥ स्वत्रातस्यात्मपालितस्यापि अखिलस्य समस्तस्य जगतो

प्रत्यङ्गानां विरचनविधौ वेधसा वाममुष्टौ
लब्धच्छेदे दृढधृततयेवाप्तसंचीणभावे ।
विस्तीर्णोद्धृवियववहनाश्रान्ततव्यक्तसारे
वन्याकल्पोचितनिवसनं वल्कलं संश्रयन्तम् ॥४०॥

भुवनस्य तत्स्थलोकस्येत्यर्थः कर्त्तरि षष्ठी। पादानुवृत्तिं पादयोः परिचर्य्यां वीक्ष्य तद्गुणगणं तयोः पादयोर्गुणगणं गुणसमूहं सन्द्रष्टुमिव कथमावाभ्यां पालितमपि जगत् पादमेवानुवर्त्तते तद्द्रष्टव्यं कोऽस्य गुणगण इति ज्ञातुमित्यर्थः। आजानु जानुपर्य्यन्तं संलम्बिताभ्यां लम्बनं गताभ्यां। तथा क्रूरैर्हिंस्रैराचारैः कारणैर्व्यथितानि पीड़ितानि जगन्ति यैस्ते तेषां दुर्वृत्तानां दुश्चरित्राणाम्। वृत्तं पद्ये चरित्रे चेत्यमरः। प्रमथनविधौ वधविधाने। उद्वासनप्रमथनक्रथनोज्जासनानि च। आलम्भपिञ्जविशरघातोन्मथवधा अपीत्यमरः। कालदण्डो यमदण्डः। कृतान्तान्तेहसोः काल इत्यमरः। तस्येव क्रिया ययोस्तौ ताभ्यां भुजाभ्यां बाहुभ्यां भ्राजमानं स्फुरन्तम् ॥ ३९ ॥

प्रत्यङ्गानामिति। प्रत्यङ्गानां अङ्गुल्यादीनां विरचनविधौ निर्माणव्यापारे वेधसा विधात्रा वाममुष्टौ वामहस्ताङ्गुलिमध्ये दृढ़धृततया अतिशयेन धृततयेव प्राप्तः संचीणभावस्तनुत्वं येन तत् तथोक्तं। मृत्पुत्तलिकादिनिर्म्मातापि प्रथमं स्थूलतो गठयित्वा वामहस्तगृहीतमध्यां तां विशेषेण गठयतीति लोके दृश्यते। तेन दौर्बल्यशङ्कानिरासायाह विस्तीर्णेत्यादि। विस्तीर्णस्य विस्तारवत् ऊर्द्ध्वावयवस्य वचसो वहने या अश्रान्तता श्रान्तिरहितता तया व्यक्तः सारो बलं यस्य तत् तथोक्तं। सारो बले स्थिरांशे चेत्यमरः। मध्यच्छेदे शरीरमध्यभागावच्छेदे। छेदं पत्नीशरीरयोरित्यमरः। वने भवा वन्यास्ते च ते आकल्पा वेशाश्चेति वन्याकल्पाः। आकल्पवेशौ नेपथ्य-

आरक्ताग्रग्रथितनखरैर्बद्धलेखस्य शुभ्रै-
रभ्रस्योच्चैश्चरणयुगलस्याञ्चतो नीलिमानम्।
रक्ताम्भोजव्यतिकरवतीं हंसराजिं वहन्तं
कञ्चिद्देशं तपनदुहितुः कान्तिभिर्ह्रेपयन्तम् ॥ ४१ ॥
तत्तद्भावानुसितबलवन्मद्वियोगव्यथाक्षि-
प्तं श्वासं तत इत इमां सामनासावनूनम्।
अन्तस्तापं सह कथयतेवोष्णवच्छ्वासभूता
स्तनापायाद्विषधरमिव स्वाङ्गमास्फालयन्तम् ॥४२॥

मित्यमरः। तेषु उचितं न्याय्यं अभ्यस्ते तूचितं न्याय्यमिति यादवः। तन्निवसनं वासस्तद्भूतं कल्कलं तरुत्वचं संश्रयन्तं धारयन्तम् ॥४०॥

आरक्तेति। उच्चैरतिशयेन शुभ्रैर्धवलैः आरक्ते सम्यक्लोहिते अग्रे पादाग्रे अङ्गुल्यग्र इति यावत्, ग्रथितैर्निर्मितैर्नखरैर्नखैर्बद्धा रचिता लेखा श्रेणी यत्र तत्तयोक्तस्य। श्रेणीलेखास्तु राजय इत्यमरः। तथा अभ्रस्य मेघस्य नीलिमानं श्यामतां अञ्चतः प्राप्नुवतश्चरणयुगलस्य कान्तिभिः शोभाभिः करणैः तपनदुहितुः सूर्यतनयाया यमुनाया इति यावत्, कालिन्दी सूर्यतनया यमुनेत्यमरः। रक्ताम्भोजानां कोकनदानां व्यतिकरवतीं व्यतिसङ्गवतीम्। व्यतिकरः समाख्यातो व्यसनव्यतिसङ्गयोरिति विश्वः। हंसराजिं हंसश्रेणीं वहन्तं धारयन्तं कञ्चित् कमपि अनिर्दिष्टं देशं ह्रेपयन्तं लज्जयन्तम्। ह्रीलिलज्जे इत्यस्य णअन्तस्य रूपम्। एतत्श्लोकान्तं रूपवर्णनम्। अत्र वायोर्दैवतत्वेन तद्दर्शनीयतयोपदेशात् वर्णनस्य न पादादित्वं क्षतम् ॥ ४१ ॥

पञ्चभिः प्राकृतीमवस्थां वर्णयित्वा इदानीं विरहावस्थोचितकर्मादीनि सम्भाव्य विकल्पेन निर्दिशति तत्तदिति॥ तैस्तैः प्रागनुभूते-

तीव्रेणापद्रुततरमनोद्वारवद्दर्शयन्तं
दृग्युग्मं वा निमिषविमुखं सान्द्रवाष्पायमानम् ।
मां मुक्त्वान्तःकरणमिव धीः प्रस्थितासि क्व बाले !
लोलीकर्तुं श्रितमतितरामित्यलं वा वदन्तम् ॥ ४३ ॥

भीतैस्तस्य स्वभावैरनभिमताः ज्ञातानाना या वक्ष्यन्ती मद्वियोगव्यथा मद्विरहदुःखानि, पीड़ा बाधा व्यथा दुःखमित्यमरः। ताभिर्व्यथाभिरित-स्ततो भ्रान्तं भ्रान्तं पुनः पुनर्भ्रान्त्वा इमां भावनामाच अप्राप्य रत्नाराधनात् तल्लभ्य शिरोमणेरपायात् अपगमात विषधरं भुजङ्गमिव नूनमवश्यं अन्त-स्तापं अन्तर्गतसन्तापं कथयता प्रकाशयतेव उष्णवतामुष्णानां श्वासानां भूम्ना महिम्ना सह स्वाङ्गं हस्तपादादिकं पक्षे भोगं आस्फालयन्तं ताड़-यन्तम् ॥ ४२ ॥

तीव्रेति । अथवा निमिषविमुखं निमीलनरहितं, निमिषोऽक्षिस्पन्द-काले चक्षुर्निमीलने पुमानिति शब्दाब्धिः। तथा सान्द्रं निरन्तरं वाष्प-मश्रुबिन्दुमुद्वमतीति सान्द्रवाष्पायमानम् । वाष्पोष्मफेनधूमाद्दुद्वान्तौ क्यङ् इत्यस्मात् शानः। वाष्पो नेत्रजलोष्मणोरिति विश्वः॥ दृग्युग्मं अक्षि-युगलं, चक्षुरक्षिणी। दृग्दृष्टी चेत्यमरः। तीव्रेण एकान्तेन उत्तापेन शोकसन्तापेन द्रुततरस्य अतिशयेन विलीनस्य द्रवीभूतस्येति यावत्, द्रुतं त्रिषु। शीघ्रे विलीने विद्राणे इति मेदिनी। मनसो द्वारवत् निर्गमनमार्गमिव, द्वारं पुनर्निर्गमनेऽभ्युपाये इति विश्वः। दर्शयन्तं लोकानालोकयन्तम्। अथवा हे बाले! धीर्बुद्धिरन्तःकरणमिव अति-तरामतिशयेन श्रितं सेवितं पक्षे नित्यसम्बद्धं मां मुक्त्वा लोलीकर्तुं चञ्चलयितुं त्वं क्व प्रस्थितासि बुद्धिरप्यन्तःकरणं मुक्त्वा प्रतिष्ठमाना चञ्चली-करोतीति भावः। अलमत्यर्थमिति एतत् वाक्यं वदन्तम् ॥ ४३ ॥

भग्नो नूनं प्रणयविमुखोऽयोध्यया राजधान्या
कालेनाप्तोऽनितरमनसा कष्टराजश्रिया वा ।
क्लिश्याम्येवं जगति यशसा विप्रयुक्तोऽद्य धर्म-
स्त्वापत्पातादिति समुद्भूतखेदान्तरं वा ॥ ४४ ॥
हा धिक् पुत्रेष्वनपरगतं शोकचिह्नस्त्वमेतत्
ज्येष्ठस्नेहात् किमिह गुरुणा शिक्षितो राम एव ।

भग्न इति । प्रणयविमुखः प्रणये परिचये विमुखोऽकृतादरः, प्रणयः स्यात् परिचये इति यादवः । यद्वा प्रणयविमुखः प्रीतिविमुखः, प्रणयास्त्वमी विश्रम्भयाच्ञाप्रेमाण इत्यमरः । पितुरादेशवशंवदतया अकृतग्रह इति यावत्; अहं अयोध्यया अयोध्याख्यया राजधान्या प्रधाननगर्य्या, प्रधाननगरी राज्ञां राजधानीति कथ्यत इति शब्दार्णवः । भग्नः कथं सापि निष्क्रान्तस्यपरामनुरक्तमासि तत्तयापि वियुज्यस्वेत्येवमभिशप्तः सन् अथवा काले सदासादनकाले पितृवसान एवेति भावः । अनाप्तो अलब्धो अहं अनितरमनसा नास्तीतरस्मिन् मनो यस्याः सा तथोक्तया कष्टराजश्रिया कुत्सया राजलक्ष्म्या भग्नः पूर्ववदभिशप्तः सन् नूनं निश्चितम् । नूनं तर्कार्थनिश्चये इत्यमरः । एवं क्लिश्यामि एवं क्लेशमनुभवामि धर्मस्तु अद्य इतोऽस्मादापत्पातात् विपत्पाताद्धेतोर्जगति लोके यशसा कीर्त्त्या विप्रयुक्तो विरहितो भवति इति एवं समुद्भूतं खेदान्तरं खेदविशेषो यस्य स तथोक्तो वा । अहं तावत् साध्वीशापेन नूनमेतद्दुःखमनुभवामि लोकः पुनरेवं संस्थित एव यद्राधिपत्यमुपेक्ष्य वनचरवृत्त्या गुरौ राज्ञां पालयतो रामस्यापि यदीदृशी दशा तद्धर्मादिविवर्द्धितं स्थायुराज्यं पुत्रसुखोदय इत्यादिवादः किंवदन्तीमात्र इत्येवं खिद्यमानमिति भावः ॥ ४४ ॥

हेति । गुरुणा पित्रा, गुरू गोष्पति पित्राद्याविित्यमरः । पुत्रेषु मध्ये ज्येष्ठस्नेहात् ज्येष्ठपुत्रस्नेहात् इह जगति अनपरगतं तातपादेतरैः पुरुषैः-

इत्थम्। चैकपरि वदता शान्तमोहोद्धतं वा
शेषावस्थामसमगुरुशुचा लक्ष्मणेनानुजेन ॥ ४५ ॥
कारुण्यानां जलनिधिमिवाद्य निःशेषकाम्यकान्तेः
स्तूपप्रायं तदनिशमसमाक्षोभसंदेहिताया: ।
पिण्डीभूतं गुणगणमिव चन्द्रवंशावतंसं
सद्गुणारं रघुकुलपतिं द्रक्ष्यसि प्राणहेतो ॥ ४६ ॥

रमदगतं याता गुरुरेव सुतवियोगशोकः प्राणत्यागेन जितो नापरैः कैर-पोति भावः। शोकं जयतीति शोकजित् शोकाभिभावकं एतत् इदं शस्त्रं प्राणत्यागरूपमस्त्रम्, आयुधन्तु प्रहरणं शस्त्रमस्त्रमित्यमरः। हा धिक्! किं राम एव शिक्षित उपदिष्टो न वर्त्मनीति शेषः। यतोऽयमपि प्रियाविरहजशोकं तेनैवास्त्रेण जयति प्रत्युतासावस्थामार्त्यस्य चक्षुषा पश्यन् शोकेनैव जीवे इति भावः। इति एवं रूपेण उपरि वदता तद्-शोपरि क्रन्दता शेषावस्थास्रमेण स्मरदशानां चरमदशाप्राप्त्या मरणस्व-रूपेणेति यावत्। शुक् शोको यस्य स तथोक्तेन, मन्युशोकौ तु शुक् स्त्रिया-मित्यमरः। लक्ष्मणेन तन्नाम्ना अनुजेन यवीयसा भ्रात्रा, यवीयोऽवरजा-नुजा इत्यमरः। असौघैर्नेत्रजलवृन्दैः, करणैः अश्रु नेत्राम्बु रोदनञ्चास्र-मश्रु चेत्यमरः। शान्तो ध्वस्तो मोहो यस्य स तथोक्तोऽहतं वा हाशब्देन विषादः शोको वा धिक् शब्देनात्मनिर्भर्त्सनं द्योत्यते हा विषादशुक्-र्त्तिष्विति। धिङ्निर्भर्त्सननिन्दयोरिति चामरः। अत्र नवमोदशा वर्णिता नवम्यामिव दशमोत्यस्तमः। तथाचोक्तं चक्षूरागस्तदनुमनसः सङ्गतिर्भावना च व्यावृत्तिः स्यात्तदनु विषयग्रामतर्षे ततोऽपि। निद्रा-च्छेदस्तदनुतनुता निस्त्रपत्वं ततोन्मादो मूर्च्छा तदनुमरणं स्युर्दशाः प्रक्रमेण इति ॥ ४५ ॥

कारुण्येति। हे प्राणहेतो! जीवनहेतो कारुण्यानां करुणरसानां

तत्रालब्धः कथमपि भवन् सानुजो राघवेन्द्रः
सोऽन्वेष्टव्यः सुरुचिरगिरेरायताधित्यकायाम्।
गोदावर्य्याः प्रबलपयसां शीकरध्वानरम्या
या सायाह्नप्रचरणविधौ भूमिरासीत् प्रिया नः ॥४७॥

जलनिधिं समुद्रमिव तथा तरुणस्य यूनो भावस्तारुण्यमिव यौवनं, वयःस्थस्तरुणो युवेत्यमरः। तस्य समाभोगेन परिपूर्णतया, आभोगः परिपूर्णतेत्यमरः। संवृंहितायाः संवर्द्धितायाः। अक्लिमाया अनाहताया एकान्तकान्तेः सातिशयशोभाया यः स्तूपोराशिः, स्तूपोऽस्त्री राशिकूटे स्यादिति शब्दार्णवः। तत्प्रायं तत्सदृशं, प्रायश्चानशने मृत्यौ तुल्यबाहुल्ययोरपीति विश्वः। तथा पिण्डीभूत घनीभूतम् एकत्रमिलितमिति यावत्। पिण्डो बोले बले सान्द्रे इति मेदिनी। गुणानां गणं संघातमिव। क्षत्रवंशानां क्षत्रियकुलानां, क्षत्रोऽस्त्री द्विजलिङ्गिनि। क्षत्रिये चेति शब्दार्णवः। अवतंसम् शेखरभूतं क्षत्रियकुलचूड़ामणिमिति यावत् पुंस्युत्तंसावतंसौ द्वौ कर्णपूरेऽपि शेखर इत्यमरः। तत्रापि विशिनष्टि रघुकुलपतिं राघवेन्द्रं मद्भर्त्तारं मम पतिं द्रक्ष्यसि तस्मिन्निति पूर्वेणान्वयः। कुलकान्तोऽयं श्लोकः ॥ ४६ ॥

ननु वियोगविधुरस्य कथमेकत्रस्थितिर्युज्यत इत्यत आह अत्रालब्ध इति॥ हे भवन्! तत्राश्रमे कथमपि केनापि प्रकारेण अलब्धः सानुजो अनुजेन लक्ष्मणेन सहितः स राघवेन्द्रो रामः सुरुचिरगिरेः प्रस्रवणाख्यस्य आयतायां दीर्घायामधित्यकायाम् ऊर्द्ध्वभूमौ, उपत्यकाद्रेरासन्नाभूमिरूर्द्ध्वमधित्यकेत्यमरः। अन्वेष्टव्यः मृगयितव्यः। गोदावर्य्याः सरितः प्रबलपयसां पतदम्भसां शीकरध्वानरम्या शीकरैः स्रुतैरम्बुकणैर्ध्वानैः पतनशब्देश्च रम्या मनोरमा, शीकरोऽम्बुकणाः स्रुता इत्यमरः। या भूमिः

कर्बूराणामरुणमसृजा कीर्णमुण्डास्थिजालं
क्षोणीं सान्ध्यश्रियमिव दिवं दर्शयन्तं सताराम् ।
मामन्विष्यन्नतुलितनिशाचारिमायापहारां
यातुञ्चार्हत्ययमनु जनस्थानभूभागमारात् ॥ ४८ ॥
क्रव्यादोऽस्मिन् जलधरनिभान् वर्षतो विम्नधाराः
कृत्वा सद्यः स हि खरमुखान् खण्डितानाशुगौघैः ।

सायाह्नचरणविधौ सायंकालोचितभ्रमणक्रियायां नोऽस्माकं प्रिया प्रीतिकरो आसीत्। नलोचिततया विरहविनोदनहेतुत्वात् तत्र स्थितिं सम्भावयामीति भावः। तदुक्तं तदङ्गस्पृष्टानामुपगतवतां स्पर्शनमपि प्रतीकारः कामव्यथितमनसां कोऽपि कथित इति ॥ ४७ ॥

अन्यत्रापि गमनं सम्भावयति कर्बूराणामिति। अतुलितोऽनुपमानावगतो निशाचारिणां राक्षसानां मायया अघटनघटनपटीयस्याशक्त्या अपहारो हरणं यस्याः सा तथोक्तां माम्। अन्विष्यन् मार्गयन् अयं राघवेन्द्रः कर्बूराणां राक्षसानाम्। कर्बूरा निकषात्मजा इत्यमरः। कर्बूराधिपतेरित्यादिप्रयोगात् दीर्घमध्योऽयम्। असृजा रुधिरेण, रुधिरे असृग्लोहितास्ररक्तक्षतजशोणितमित्यमरः। अरुणं ईषल्लोहितम्। अव्यक्तरागस्त्वरुण इत्यमरः। मुण्डानां शिरसामस्थीनि मुण्डास्थीनि तेषां जालं समूहः मुण्डास्थिजालं कीर्णम् इतस्ततः पतितं मुण्डास्थिजालं यत्र स तथोक्तस् अतएव क्षोणीं सतारां सनक्षत्रां सान्ध्यश्रियं सन्ध्यासम्बन्धिनीं शोभां, श्रीर्वेशरचनाशोभेति विश्वः। दिवं आकाशं दर्शयन्तमिव। आरात् समीपे, आरात् दूरसमीपयोरित्यमरः। जनस्थानस्य भूभागं भूमिखण्डम् अनुलक्षीकृत्य यातुं गन्तुमप्यर्हति। तत्राप्यन्वेष्यमिति भावः ॥ ४८ ॥

अन्तःकुण्डेष्वनलमृषिभिर्यावदाधापयत् प्राक्
तावत् तेषामपि परिजनैस्तेऽपि सन्त्यत्र गूढाः ॥ ४९ ॥
तत्रोद्देशे वसति नियतं देवता तद्वनानां
भूमे र्चूड़ागत इव मणिर्देहिनीवानुकम्पा।
यद्वायुष्मन् स्थितिमविदितां तत्त्वतो ज्ञातुकाम-
स्तां मीमांसां बुध इव तयोर्वेदयोः संश्रयेथाः ॥ ५० ॥

ननु कुतोऽकस्मात्तत्र निशाचरापहरणानुमानं सत्यपि तस्मिन् कुतो वा स्थानान्तरमुज्झित्वा तत्रैव गमनमिति शङ्कामपनेतुं हेतुमयं श्लोकमाह क्रव्याद इति। हि यस्मात् स राघवेन्द्रः अस्मिन् जनस्थाने प्राक् पूर्वकाले विघ्नधारा विघ्नसन्ततीर्दर्शितो जनयतः एतएव जलधरनिभान् मेघोपमान्, निभसङ्काशनीकाशप्रतिकाशोपमादय इत्यमरः। खरमुखान् खरप्रधानान्, मुखमुपाये प्रारम्भे श्रेष्ठे निःसरणास्ययोरिति हैमः। क्रव्यादो राक्षसान् आशुगैर्वाणवृन्दैः, आशुगौ वायुविशिखाविल्यमरः। सद्यः सपदि खण्डितान् छिन्नान् कृत्वा। मेघा अपि आशुगैर्वायुसमूहैः खण्डिता भवन्तीति भावः। यावत् यदा ऋषिभिस्तपस्विभिः कर्तृभिः कुण्डेषु होमकुण्डेषु अन्तर्मध्ये अनलं वह्निम् आधापयत् अस्थापयत् तावत् तदा येषां खरादीनां परिजनैः परिवारजनैरपि अर्थादन्तःकुण्डेषु हृदयेषु अनलं शोकानलं क्रोधानलं वा आधापयत्। ततो निशाचरापहरणानुमानं सम्भवति। इदानीं स्थानान्तरमुज्झित्वा तत्रैव गमनकारणं दर्शयति। तेपीत्यादि ते खरपरिवारा गूढ़ाः प्रच्छन्नाकृतयः सन्तोऽत्र जनस्थाने सन्त्यपि वर्त्तन्ते च। अतस्तत्रगमनं सम्भावितमिति भावः ॥ ४९ ॥

तत्रोद्देश इति। यद्वेति पक्षान्तरे। भूमेर्वसुन्धरायाः चूड़ागतो मौलिगतो मणिरिव तथा देहिनी मूर्त्तिमती अनुकम्पा दयेव तद्वनानां जन

प्रागन्योऽन्यातिमधुरसखीशब्दविक्षेपलक्ष्ये
आवामास्व श्वसन रसिके कन्दुकक्रीडितानाम् ।
तन्नूनं मत्प्रहितमुचितं वर्त्तयिष्यत्यसौ त्वां
प्रेम्णो भङ्गः सुहृदि सुहृदः प्राणभङ्गेऽप्यशक्यः ॥ ५१ ॥

स्थानादीनां देवता अधिष्ठात्री तत्प्रदेशे तत्प्रदेशे नियतमविच्छेदेन वसति निवसति, आयुः प्रशस्तिरस्यास्तीति आयुष्मान् मतुरस्त्यर्थ इति मतुः । हे आयुष्मन् ! तयो रामलक्ष्मणयोरविदितां अनवगतां स्थिति अवस्थानं तत्त्वतः परमार्थतो ज्ञातुकाम स्त्वं वेदयोरविदितां स्थितिं स्वस्वविषयावस्थानं कुत्र कः स्यास्यतीति यावत् तत्त्वतो ज्ञातुकामो बुधो विद्वान् मीमांसां वेदविचारपद्धतिमिव तां वनदेवतां संश्रयेथाः प्राप्नुयाः । यथा मीमांसा बुधं वेदयोः स्थितिं वेदयेत् तथा सापि त्वां तयोः स्थितिं वेदयिष्यतीति भावः ॥ ५० ॥

कदाचिदियमपरिचितं मामवधीरयेदिति शङ्कामपनेतुमाह प्रागिति । हे श्वसन ! प्राक् तत्रावस्थानकाले आवां सा चाहञ्च अन्योऽन्यस्य परस्परस्य अतिमधुरसखीशब्दविक्षेपलक्ष्ये अतिमधुरस्य श्रुतिसुभगस्य सखीशब्दस्य सखीति शब्दस्य विक्षेपलक्ष्ये विक्षेपभूमौ सख्यौ कन्दुकक्रीड़ितानां गेण्डुकक्रीड़ानां, गेण्डुकः कन्दुक इत्यमरः । रसिके रसज्ञे आस्व अभवाव । लक्ष्ये आवामित्यत्र वदवेमोयु इति द्विवचनैदन्तत्वात् सन्धिनिषेधः । तत् तस्मात् असौ वनदेवता मत्प्रहितं मया प्रेरितं त्वम् उचितं यथोपयुक्तं वर्त्तयिष्यति स्थापयिष्यति नूनं सम्भावयामि । ननु सख्यां दूरगतायां सखित्वमपि दूरं गच्छति तत् कोऽयं नियम इत्यत आह प्रेम्ण इत्यादि प्राणभङ्गेऽपि प्राणान्तेऽपि सुहृदि मित्रजने, अथ मित्रं सखा सुहृदित्यमरः । प्रेम्णः प्रणयस्य भङ्गः खण्डनं सुहृदो अशक्यः अपार्य्यः स्यात् ॥ ५१ ॥

यः सेमन्तीतरुरगणितस्वाङ्गभङ्गम्पयोभिः
स्नेहाद्दत्ताऽर्जित इति मया प्राङ्गणे वर्द्धितोऽस्ति।
सा पश्यन्ती गतरसतया शुष्कपुष्पाणि नूनं
वाष्पोत्सेकैश्चरति सदनुष्ठेयकर्मैव तस्मिन्॥ ५२ ॥

वीणातन्त्रीमधुररणिताहूतशारङ्गयूथा-
च्छायान्तं वा नवशशुसभासङ्गनिर्वेददीनम्।
मुक्त्वा वीणामशिथिलगुणां सम्मुखोपेत्य गात्रे
सस्नेहं सत्कृतकृतनयं पाणिना व्यामृशन्तीम्॥५३॥

क्व तावदस्या दृष्टिं लप्स्य इति प्रश्नशङ्कयाह यः सेमन्तीति। मया स्वार्जित इति स्नेहात् अगणितस्वच्छीकृतः स्वाङ्गानां निजावयवानां भङ्गो यत्र तत् तथोक्तं यथा स्यात् तथा पयोभिः सलिलैर्वर्द्धितो वृद्धिं नीतः प्राङ्गणे चत्वरभूमौ यः सेमन्तीतरुः सेउतीतिप्रसिद्धस्तरुरस्ति-वर्त्तते गतरसतया गतो रसो जलं यस्मात् स तथाभूततया, शृङ्गारादौ जले वीर्य्ये सुवर्णे विषशुक्रयोः। आस्वादे च रसं प्राहुरिति शब्दार्णवः। तस्मिंस्तरौ शुष्कपुष्पाणि पश्यन्ती सा वनदेवता वाष्पोत्सेकैरश्रुविसर्ज्जनैः नूनं सदनुष्ठेयकर्मैव सत्कर्त्तव्यकर्मैव जलदानरूपम् चरति आचरति तत्रैव त्वया द्रष्टव्येति भावः॥ ५२॥

पक्षान्तरेण क्रियान्तरं सम्भावयति वीणातन्त्रीति द्वाभ्याम्। अथवा वीणातन्त्रीणां वीणागुणानां, तन्त्रीवीणागुणे तनोः। शिरायाञ्चात्मतायाञ्चेति विश्वः। मधुररणितैर्मधुरध्वनिभिराहूतं आनीतं यत् शारङ्गयुथं हरिणकुलम् चातके हरिणे पुंसि शारङ्गः शवलेत्रिष्विति सजातीयैः कुलं युथमिति चामरः। मृगाणां गीतप्रियत्वादिति भावः अतएवोक्तं दत्तावधानं मधुलेहिगीतौ प्रशान्तचेष्टं हरिणं जिघांसुरिति। तस्मा-

ब्रूयास्चैनां व्यजनपयसां शीकरैः सेविनीं
ते सिन्धोः पारं यदियमभगा जातुधानेन नीता ।
तच्चारित्रं सभयमसवः पृष्ठतः स्थापयन्ते
न व्याहन्युः कथमपि यथा ताननिष्कृष्य पापाः ॥५५॥
भर्त्तुः प्राणैरनणु भजतां सन्धिमात्माच्चमाणां
स्वप्राणानां बलवदविणाकर्षणे भर्त्तुपीड़ाम् ।
सम्मान्येषा वदति रुदती त्वां परिष्वङ्गपूर्वं
तत् कार्य्यं ते लघु लघु यथा राचसान् सोऽभियाति॥५६॥

मरः। चाण्डालं वस्तुतश्चाण्डालमहं सन्ये मुहुः पुनः पुनरिति व्याहरन्तीं वदन्तीञ्च इमां वनदेवतां पश्येः। युग्मकम् ॥ ५४ ॥

ब्रूया इति। व्यजनस्य तालवृन्तस्य पयसां वारीणां पवनस्य। शीतलतायै निदाघे सजलव्यजनेनात्मानं वीजयन्तीति लोकसिद्धिः। शीकरैः कणैः करणैः ते तव सेविनीं उपचारपरायणाम् एनां वनदेवतां वक्ष्यमाणं ब्रूयाः ब्रवीतु च यत् इयमभगा असौभाग्या। स्त्रियां यशसि सौभाग्ये योनौ कामे महिम्नि च। सूर्यसंज्ञाविशेषे च मृगाङ्केऽपि भगः स्मृत इत्यनेकार्थध्वनिमञ्जरी। सीतेत्यर्थः। जातुधानेन रचसा। जातुधानः पुण्यजनो नैर्ऋतो जातुरचसी इत्यमरः। सिन्धोरुदधेः पारं कूलान्तरं नीता गमिता। सभयं रचसो भीतं तच्चारित्रं तस्याः सीतायाश्चरितं पातिव्रत्यमिति यावत् असवः प्राणाः पुंसि भूम्न्यसवः प्राणा इत्यमरः। पृष्ठतः पश्चात् स्थापयन्ते रचन्ति यथा येन पश्चात् रचणेन पापाः निशाचरास्तानसूननिस्कृष्य अवहिस्कृत्य कथमपि न व्याहन्युर्न नाशयेयुः ॥ ५५ ॥

प्राणव्ययेनापि चारित्रेण तिष्ठतु कथं बिभेतीति वनदेवतोत्तरमाशङ्क्याह भर्त्तुरिति। भर्त्तुः परिणेतुः प्राणैः सह सन्धिं श्लेषम्। सन्धिः श्लेष इत्यमरः। अनणु अतिशयेन भजतां धारयताम्। प्राणैस्ते प्राणान् सन्दधा-

सन्निर्दिष्टास्वकृपणमते तास्वरण्यस्थलीषु
गाढक्लेशान्विततनुरपि स्वार्थबुद्ध्या विचिन्वन्।
द्वित्रानह्नस्त्वपगमयितुं वासरान् काननेऽस्मि-
न्नङ्गीकुर्वन् किमपि सहसा कोऽपि हृष्येदुपेक्ष्य ॥५७॥

स्यांस्थिभिरस्थीनि मांसैर्मांसानि त्वचा त्वचमिति श्रुतेर्विवाहादेव दम्पत्योः प्राणादीनां सन्धेः शास्त्रसिद्धत्वादिति भावः। आत्माधमाणामात्मन्यप्रज्ञा-नाम्। अधमं प्रज्ञ इत्यमरः। आत्मरक्षाकरणासमर्थानामित्यर्थः। स्वस्यात्मनः प्राणानाम् अरिणा रिपुणा रावणेनेत्यर्थः। बलवदाकर्षणे भर्त्तृपीड़ां सम्भाव्य अनुमाय। परस्परसान्धिमतां वस्तूनामन्यतराकर्षणादेवान्यतरदप्याकृष्यत इति लोकदृष्टेरिति भावः। एषा सीता रुदती सती परिष्वङ्गपूर्वमालि-ङ्गनपूर्वम्। परिरम्भः परिष्वङ्गः संश्लेष उपगूहनमित्यमरः। त्वां वक्ष्यमाणं वदति यथा येन स राजेन्द्रो लघु लघु अतिद्रुतम्। लघु क्षिप्रमरं द्रुतमित्यमरः। राक्षसान् अभियाति राक्षसानामभिमुखं याति तत् ते तव कार्य्यं कर्त्तव्यम्। अनुरोधादिति भावः ॥ ५६ ॥

सन्निर्द्दिष्टास्विति। अकृपणा परोपकारेष्वकुण्ठा मतिर्यस्य सः हे अकृपण-मते उद्गाढ़क्लेशेन अतिमात्रक्लेशेनान्विता तनुर्यस्य स तथोक्तोऽपि त्वं स्वार्थ-बुद्ध्या निजप्रयोजनबुद्ध्या सन्निर्द्दिष्टासु मयोपदिष्टासु तासु अरण्यस्थलीषु वनभूमिषु विचिन्वन् मार्गयन् तामिति शेषः। अन्वीक्षणं विचयनं मार्गणं मृगणा मृग इत्यमरः। अस्मिन् कानने द्वित्रान् द्वौ त्रयः परि-माणमेषामिति संख्याया डोऽवहारिरिति डप्रत्ययः। द्वित्रिसंख्यानित्यर्थः वास-रान् दिनानि अपगमयितुं यापयितुं अर्हसि। अत्रार्थान्तरं न्यस्यति हि यतः कः पुमान् किमपि कर्म्म अङ्गीकुर्वन् कर्त्तुमभ्युपगच्छन् सहसा समधिकचेष्टामन्तरेण उपेक्ष्य अनादृत्य हृष्येत् हृष्टो भवेत् कोऽपि नेत्यर्थः ॥ ५७ ॥

इति पूर्ववातटीका समाप्ता।

प्राचीभर्त्तुर्मुकुटमणिव प्रोज्ज्वलन्पद्मरागं
सुप्तं मोहाकुलमिव जगद्बोधयन्तं कराग्रैः।
प्रातःप्रातस्तरुणमरुणं पर्य्युपस्थाय सम्यक्
भ्राम्यन् प्रीतिं गमय विपिनाभोगलक्ष्मीं समन्तात् ॥५८॥
तत्रानल्पोद्दलितनलिनोत्सङ्गसंसङ्गिभृङ्गं
साहस्राक्षं वपुरिव दिवः पातितं दैत्यशौर्य्यैः।
यद्यद्रक्ष्यस्यतिशुभसरस्तत्तदेवोपगच्छेः
सौधीभाव्यैः सलिलपृषतैस्ताड़ितं प्रीणनार्थि ॥ ५९ ॥

तत्रस्थस्य ते न किमपि दुःखमपि तु सुखमेवस्यादित्याह प्राचीति। प्रातः प्रातः प्रत्यहम्मुख प्राच्याः पूर्व्वस्या दिशो भर्त्तुरिन्द्रस्य मुकुटगं किरीटस्थम्। मुकुटं किरीटं पुंनपुंसकमित्यमरः। प्रोज्ज्वलत्पद्मरागं दीप्तिमद्रक्तवर्णमणिविशेषमिव। पद्मरागा घनं रागं बिभ्राणाः स्फटिकाश्चिंष इति युक्तिकल्पतरुः। तथा सुप्तं सायंकालतस्यन्तम् अतएव मोहाकुलं मूर्च्छाकुलमिव जगत् भुवनं कराग्रैरंशूनामग्रैर्हस्ताग्रैरिवेत्यर्थः। बलिहस्तांशवः करा इत्यमरः। बोधयन्तं जागरयन्तं तरुणं नवम्। द्रुमूले ना तु तरुण एरण्डे मातुलुङ्गके। कुलपुष्पे च पुत्रे च वाच्यवत् यूनि नूतने इति शब्दाब्धिः। अरुणमादित्यं सम्यक् यथाविधि पर्य्युपस्थाय उपास्य समन्तात् सर्व्वासु दिक्षु भ्राम्यन् विपिनस्य वनस्य आभोगः परिपूर्णता तस्य लक्ष्मीं शोभाम्। शोभासम्पत्तिपद्मासु लक्ष्मीः श्रीरिव दृश्यत इति शाश्वतः। प्रीतिमानन्दं गमय प्रापय। सा त्वया हर्षं गमिष्यतीति भावः॥ ५८॥

तत्रेति। तत्रारण्ये अनल्पं निःशेषं यथास्यात्तथा उद्दलितानि विकशितानि च तानि नलिनानिचेति अनल्पोद्दलितनलिनानि तेषाम्। अथवा अनल्पानां बहूनां उद्दलितनलिनानामुत्सङ्गानां क्रोड़ानां संसङ्गिनः

याया स्त्वञ्चेत् पवन वसतिं तापसानां दिदृक्षुः
सत्कर्मार्हं तदिह विततं शाखिशाखावसक्तम् ।
ऐणं चर्म्मासनमधिवसेर्लम्बसे येन चाग्र्यं
हर्म्यालम्बिव्यजनफलकान्दोलप्रमोदम् ॥ ६० ॥

सम्पर्कवन्तो भृङ्गा भ्रमरा यत्र तत् अतएव दैत्यवीर्य्यैरसुरबलैः वीर्य्यं बलप्रभावौ चेत्यमरः । कर्त्तृभिः दिवः स्वर्गात् पातितमधोनीतं साहस्राक्षं सहस्रमक्षीणि यस्य तत् सम्बन्धि । सक्थ्यक्ष्णः षः स्वाङ्ग इति षः । वपुःशरीरमिव । भृङ्गयुक्तानेकशतकमलवत्तया साहस्राक्षवपुस्त्वेनोत्प्रेक्षा । अत यत् अतिशयेन शुभा शोभा यस्य । शुभं श्रेयः शुभा शोभा शुभा प्रोक्ता हरीतकीत्यनेकार्थध्वनिमञ्जरी । तच्च तत् सरश्चेत्यतिशुभसरः शोभातिशयशालि कासारं द्रक्ष्यसि तत्तदैवोपगच्छेः प्राप्नुयाः । यस्मात् तत् सरो माध्वीकाख्यैर्मधुमद्भिः । मधुमाध्वीकमद्ययोरित्यमरः । सलिलपृषतैर्जलविन्दुभिः । पृषन्ति विन्दुपृषताः पुमांसो विप्रुषः स्त्रिय इत्यमरः । ते तव प्रीणनार्थिं प्रीणनं प्रीत्युत्पादनमभ्यर्थयते ॥ ५९ ॥

याया इति । हे पवन ! त्वं चेत् यदि दिदृक्षुर्द्रष्टुमिच्छुः सन् । दृशेः सनन्तात् सनभिक्षाशंसभिक्ष उरित्युप्रत्ययः वर्द्धोकिदिति वाशब्दस्यव्यवस्थावाचित्वात् ऋतो न रेफः । तापसानां तपस्विनाम् । तपस्वी तापसः परिकाङ्क्षीत्यमरः । वसतिं वेश्म याया गच्छेः । वसती रात्रिवेश्मनोरित्यमरः । तत् तदा इह तापसाश्रमे शाखिनां पादपानां शाखायाम् अवसक्तं लम्बमानं तथा सत्कर्म्मार्हं जपहोमाद्यनुष्ठानोचितं परिशुद्धमिति यावत् विततं विस्तारवत् ऐणं मृगसम्बन्धि चर्म्मासनम् अधिवासेः । अन्वध्युपावसेत्यधिकरणस्य कर्म्मत्वम् । तेन किं स्यादित्यत आह येन तथाविधचर्म्मासनाधिवासेन अग्र्यम् उत्कृष्टं हर्म्ये धनिनां गृहे । हर्म्यादि धनिनां वास इत्यमरः । आलम्बत इति हर्म्यालम्बी सचासौ व्यजनफलकः फलकाकारव्यजनश्चेति हर्म्यालम्बिव्यजनफलकः । टानापाका इति यस्य प्रसिद्धिः । तस्य सङ्गेन

अंशून् वर्षत्यनलवदयवत्तत्र मध्यन्दिनार्के
सारङ्गीणां नवदलतरुच्छायसंघातितानाम् ।
अन्धीकुर्वन्नयनविततीः सौमनस्यैः परागैः ।
फल्गुक्रीड़ारसमनुभवेर्भास्वतो गोपितात्मा ॥ ६१ ॥
दावाग्निश्चेत् स पशुसटवीं जायते तां दिधक्षु-
र्बन्धुप्रेम्णा क्षणमपि तदा मा सहायोऽभवत्वम् ।
शाम्यै देशोऽलुलितशिखया सर्वतश्चाविसर्पन्
गुप्ता च स्यात्तव मुनिजनस्थानहिंसेव मैत्री ॥ ६२ ॥

संसर्गेण यो दोलप्रमोदो दोलनानन्दस्तञ्च लप्स्यसे गमिष्यसि। वसन्तसमयोचितस्य तत् सुखस्य न हानिरिति भावः ॥ ६० ॥

अंशूनिति । मध्यन्दिनार्के मध्याह्नसूर्य्ये । विभक्तेरलुक् । अनलवयवत् वह्निकणानिव अंशून् मयूखान् वर्षति किरति सति भास्वतो दिवाकरात् गोपितः अन्तर्द्धापित आत्मा येन स तथोक्तस्त्वं भास्वत इति यतोऽन्तर्द्धिरित्यपादाने पञ्चमी । सौमनस्यैः पुष्पेस्य उतृगतैः परागै रेणुभिः करणैः । परागः कौसुमे रेणाविल्यमरः । नवानि नूतनानि दलानि पर्णानि येषां ते च ते तरवो महीरुहाश्चेति तेषां छाया नवदलतरुच्छायम् षष्ठ्याम्छाया बहूनाञ्चेत्यिमरसंग्राहात् क्लीवत्वम् । तेन संघातितानां एकत्रस्थीकृतानां सारङ्गीणां मृगीनां नयनविततीर्विस्तृतनयनानि अन्धीकुर्वन् फल्गु क्रीड़ायाः फाग इति प्रसिद्ध चूर्णविशेषक्रीड़ाया वसन्तसमयोचितायाः इति भावः । रसं सुखम् अनुभावः अनुभवे । रसो जनं रसो हर्ष इत्यनेकार्थ ध्वनिमञ्जरी । भास्वतो गोपितात्मेत्यनेन मध्याह्नार्कमरीचिसन्तापो माभूत् माचभूत्तथाविधक्रीड़ाविशेषोऽस्य नयनगोचर इति द्वयमेव प्रकाटितम् ॥ ६१ ॥

दावेति । स पशु पशुभिर्जन्तुभिः सहितां तामटवीमरण्यानीं दिधक्षु-र्दग्धुमिच्छुर्दावाग्निररण्यवह्निः । दवो दावो वनारण्यवह्नी इत्यमरः ।

वेगात् कक्षास्खलितविकले पश्चिमाहार्यशृङ्गे
पाताघातात् स्रवति रुधिराणीव सायं दिनेशे
अम्भोजिन्यास्तव कुमुदिनीहासविसृष्टदृष्टे
रप्याद्ध्याद्धृदि गुरुशुचं पश्यतो म्लानभावः ॥ ६३ ॥

जायते चेत् उत्पद्यते यदि तदा बन्धुप्रेम्णा मित्रस्नेहेन क्षणमपि क्षणैकमपि त्वं सहायोऽसौ भव तस्य साहाय्यं माकार्षीः। तेनैतद्द्वयं स्यादित्याह शाम्येदित्यादि। एष दावाग्निः अलुलितशिखया अनान्दोलितशिखया मरुत्साहचर्यविरहात् स्थिरीभूतशिखयेति यावत्। प्रेङ्खोलितस्तरलितोलुलितान्दोलिताश्चेति सूरिप्रयोगः। सर्वतः सर्वासु दिक्षु अविसर्पन् अव्याप्नुवन् शाम्येत् शान्तिं गच्छेत्। तथा मुनिजनानां तापसानां स्थानस्य हिंस्रेण हिंसनशीलेन पुंसा तव मैत्री मित्रता च। मित्रस्य भाव इति ष्यञः स्त्रीनपुंसकयोर्भावक्रिययोः ष्यञि त्वमरसंग्रहात् स्त्रीत्वम्। गुणा साधुभिरनवनता स्यात्। तदवगमे उपहासः स्यादिति भावः। तथाचोक्तं उपहासाय किं न स्यादसत्सङ्गो मनीषिणामिति ॥ ६२ ॥

वेगादिति। सायं सन्ध्याकाले वेगात् वेगवशात् कक्षा ग्रहाणां भ्रमणमार्गो ज्योतिःशास्त्रेष्वभिहितस्तस्मात् स्खलितेन स्खलनेन अन्यतो गमनेनेति यावत् विकले स्वगितेन्द्रिये दिनेशे सवितरि पश्चिमाहार्यस्य पाश्चात्यपर्वतस्य। महीध्रे शिखरिक्ष्माभृदहार्यधरपर्वता इत्यमरः। अस्तगिरेरिति यावत्। शृङ्गे सानौ। शृङ्गं प्राधान्यसान्वोरित्यमरः। पाताघातात् पतनाघातात् रुधिराणि शोणितानि वमति उद्गिरतीव सति कुमुदिन्याः कुमुद्वत्या हासेन प्रकाशेनेव विसृष्टा दग्धा दृष्टिरुन्मीलनं यस्याः सा। इव शब्दगस्यसानि समासः। सृष्टसृष्टोषिता दग्धे इत्यमरः। तथोक्तायाः अम्भोजिन्याः पद्मिन्याः म्लानभावः क्लिष्टभावः पश्यत आलोकयतस्तव हृदि मनसि अपि अवश्यमेव गुरुशुचं महान्तं शोकं आदध्यात् जनयेत्। अपि सम्भावनायाम् ॥ ६३ ॥

कोकानाञ्च प्रणयिविरहोत्कण्ठया जर्ज्जराणां
कण्ठोद्गीर्णैः करुणरटितैर्गाढसंविद्धमर्मा ।
सौसादृश्यं विषधरधृतैर्दुःसहैराप्नुवद्भि-
र्नाप्नासि त्वं निशि परमिदं नेह पारिप्लवत्वम् ॥ ६४ ॥
तस्माद्भावानुपगतपरप्रौढसन्तापतप्त
विष्वक्चारिन् घनरसमिव स्वं भवानङ्गजातम् ।
कुर्व्वाणस्त्वं हृदयमपि भुवस्तापनिर्वाणहेतुं
जीमूतान्तं गमयतु लघुद्दूरलम्बप्रचारम् ॥ ६५ ॥

कोकेति । इह वनभूमौ निशि रजन्याञ्च प्रणयिनः सुहृज्जनस्य विरहे विप्रयोगे या उत्कण्ठा महती मनोवेदना । रागे त्वलब्धविषये वेदना महती तु या । संशोषणी तु गात्राणां तामुत्कण्ठां विदुर्बुधा इत्युक्तेः । तया जर्ज्जराणां जीर्णीभूतानां जर्जरो वाच्यवज्जीर्णे इति विश्वः । कोकानां चक्रवाकानां कोकश्चक्रश्चक्रवाक इत्यमरः । कण्ठोद्गीर्णैः कण्ठेन उद्ग-मितैः तथा दुःसहैर्दुःखेन सहनियैः अतएव विषधराणां विषाक्त वाणानां धृतैः सौसादृश्यं सुसदृशत्वं आप्नुवद्भिर्लभमानैः करुणरटितैः करुणरस-जस्वनैर्गाढमतिशयेन संविद्धं मर्म्म यस्य स तथोक्तस्त्वं । मर्म्मशिरादि-सन्निपातगतं प्राणस्थानं तदुक्तं भावप्रकाशे सन्निपाताः शिरास्नायुसन्धि मांसास्थिसम्भवाः । मर्म्माणि तेषु तिष्ठन्ति प्राणा अपि विशेषतइति । पारिप्लवत्वं चञ्चलत्वं चञ्चलं तरलञ्चैव पारिप्लवपरिप्लवे इत्यमरः । नाप्नासि न प्राप्स्यसि न एवं न प्राप्स्यस्येवेत्यर्थः । द्वौ नञौ प्रकृतार्थं गम-यत इति न्यायात् ॥ ६४ ॥

तस्मादिति । विष्वक् सर्व्वतश्च चित्तं शीलं यस्य स सर्व्वतो विष्वगित्य-पीत्यमरः । हे विष्वक्चारिन् तस्मात् विविधविरहघटनावलोकनेनात्य-न्तवात्सल्यात् हेतोः रातौ भवान् घनरसो जलमिव उपगतेन समीपवर्त्तिना

धारायन्त्रैर्निचित इव यः शीकरैर्निर्झरिण्याः
शीर्णैः पुष्पैः सुरभितशिलापट्टकाकीर्णभूमिः ।
यत्र श्लाघ्यस्वरपरभृतो रौति गन्धर्ववृत्तिः
सोऽद्रेः सानुः पवन भविता विश्रमायोचितस्ते ॥६६॥

परेषां कलिन्यादीनां पक्षे वङ्गादीनां प्रौढसन्तापेन प्रवृद्धमनोदुःखेन पक्षे महोष्मणा । तप्तं प्राप्ततापम् । प्रवृद्धं प्रौढमेधितमित्यमरः । ख्यमालीयमङ्कुरजातम् । अङ्कुसन्दूहं जातं व्यक्तीवजन्तम्निति मेदिनी; भुवः पृथिव्या हृदुमाकर्ष स्वाभिमुखानयने प्रयत्नमपि मुक्ता त्वया । तदाहसिद्धान्तशिरोमणौ । आकृष्टिशक्तिश्च मही तया यत् खस्थं गुरुस्वाभिमुखं स्वशक्त्या । आकृष्यते तत् पततीव भाति समे समन्तात् कुरियं यतः खे इति । सहुद्दुतगामी पक्षे अगुरुः सन् तापनिर्वाणस्य तापशान्तेर्हेतुं तथा दूरं भूमेर्दूरवर्त्तिनं तथा अभ्राणां मेघानां प्रचारो यत्र पक्षे अभ्रे आकाशे प्रचारो यस्य स तम् । अभ्रं नभः स्वर्गवलाहकेष्विति विश्वः । जीमूतान्तं जीमूतस्य पर्वतस्य पक्षे मेघस्य अन्तमवयवं गमयतु प्रापयतु । जीमूतौ मेघ पर्वतावित्यमरः । अन्तमधिकृत्य तथैवावयवार्थेऽपीति शब्दार्णवः । रात्रौ तं प्रदेशं यात्विति भावः ॥ ६५ ॥

तत्रापि प्रदेशविशेषमुपदिशति धारेति । हे पवन ! अद्रेः पर्वतस्य यः सानुर्निर्झरिण्याः निर्झरोऽम्बुपतनम् । निर्झरो झर इत्यमरः । तद्वत्याः सरितः शीकरैरम्बुकणैः करणैर्धारायन्त्रैः फुयारा इति प्रसिद्धैर्निचितो व्याप्त इव । तथा शीर्णैः पतितैः पुष्पैः सुरभिता सुगन्धीकृता ये शिलापट्टकाः प्रस्तरफलकास्तैराकीर्णा सङ्कुला भूमिर्यत्र स तथोक्तः । तथा यत्र सानौ श्लाघ्यः प्रशंसनीयः स्वरो यस्य सचासौ परभृतः कोकिलश्चेति सगन्धर्ववृत्तिर्गन्धर्वस्य गायनस्येव वृत्तिः प्रवर्त्तनं यस्य स तथोक्तः सन् । गन्धर्वो हाहस्तिप्रोक्तो गन्धर्वो गायनेऽपि चेति साहसाङ्कः । वृत्तिर्विवरणाजीवकोषि

ज्योतिष्मन्तो जरठतरवः स्पर्शनेनानुकम्प्याः
स्वैरालोकैः शिखरिसरणेर्दर्शितोद्घातिभागाः ।
येषां मन्ये परिणतशरच्चन्द्रमाः शस्यमेकं
भोगायास्तेऽमृतरसमयं व्योम्नि दाक्षायणीनाम् ॥ ६७ ॥
कन्यामेवं समधिकगतस्तत्र तत्रोक्तभूमौ
मत्सख्या वा सहृदयमनसा दर्शितेऽन्यप्रदेशे ।

क्यादिप्रवर्त्तने इति मेदिनी । रौति ध्वनति स सानुस्ते तव विश्रमाय निर्वृतये उचितो न्याय्यो भविता । सन्ततमस्य तथाविधस्थानसेवोचित्यादिति भावः । तदुक्तं सुश्रुतेन । यथा धारागृहे विगलितोदकदुर्दिनाभे स्नातः शयीत सलिलानिलशीतकुक्षौ । गन्धोदकैः सुकुसुमैरुपसिक्तभूमौ पद्माम्बुचन्दनरसैरुपलिप्तकुड्ये इति ॥ ६६ ॥

ज्योतिष्मन्त इति । स्वैः स्वीयैरालोकैरुद्द्योतैर्द्वारैः । आलोको दर्शनोद्द्योतावित्यमरः । शिखरिणः पर्वतस्य सरणेर्मार्गस्य सरणिः पद्धतिः पद्या वर्त्तन्येकपदीति च इत्यमरः । उद्घातयन्ति पादं स्खलनं जनयन्तीत्युद्घातिनो निम्नोन्नताः । उद्घातस्तु पुमान् पादस्खलने इति मेदिनी । ते च ते भागाश्चेति उद्घातिभागाः । दर्शिता उद्घातिभागा यैस्ते तथोक्ता ज्योतिष्मन्तो दीप्तिमन्तो जरठतरवो परिणततरवः । ओषधिविशेषा इति यावत् । जरठः कर्कशे पाण्डौ कठिनेऽप्यभिधेयवदिति मेदिनी । स्पर्शनेन स्पृष्ट्या अनुकम्प्या अनुकम्पनीयाः । स्वैरालोकैरित्यादिना उपकारो दर्शित इदानीं तेषामुत्कर्षप्रदर्शनाय प्रोच्यते येषामित्यादि । मन्ये अनुभवामि परिणतः पूर्णो यः शरच्चन्द्रमाः शरदिन्दुः तद्रूपम् अमृतरसमयम् अमृतरसात्मकं येषां तरूणामेकं शस्यं फलम् । वृक्षादीनां फलं शस्यमित्यमरः । व्योम्नि आकाशे दाक्षायणीनां अश्विन्यादितारानाम् । दाक्षायण्योऽश्विनीत्यादितारा इत्यमरः । भोगाय आस्ते वर्त्तते ते तरव इत्यन्वयः ॥ ६७ ॥

यद्वै तस्मादवहितमतेर्गच्छतस्ते पदव्यां
लक्ष्णोर्नूनं स भवति पुरा गोचरो राघवेन्द्रः ॥६८॥
साशङ्किष्ठा ननु रघुवरासन्निधिं तत्स्थलीषु
स्वैरं तस्मिन् दृढपरिकरोत्साहयोः षण्ढताञ्च ।
नानिर्णीते झटिति हि जनो याति वैमुख्यमर्थे
नापत्पातं प्रशमयति वा साहसैः पौरुषाढ्यः ॥६९॥

वन्यामिति । एवं रूपेण वन्यां वनसमूहम् । वन्या वनसमूहे स्यादित्यमरः । समधिवसतस्तत्र वसतस्तव तत्र तत्र उक्त भूमौ उपदिष्टभूमौ सदयमनसा दयार्द्रचित्तया मत्सख्या वनदेवतया दर्शिते अन्यस्मिन् प्रदेशे वा यदा अवहिता साभिनिवेशा मतिर्यस्य स तथा भूतस्य अर्थादितस्ततः पश्चतः सन एतस्मात् प्रदेशात् गच्छतस्ते तव पदव्यां पथि । अयनं वर्त्ममार्गाध्वपन्थानः पदवीसृतिरित्यमरः । स राघवेन्द्रो नूनं पुरा अग्रे अक्ष्णोर्नयनयोर्गोचरो विषयो भवति भविष्यति । रूपादिनभिधाय विषया अमी गोचरा इन्द्रियार्थाश्चेत्यमरः । यावत् पुरास्थां भव्य इति भविष्यति ॥६८॥

अथासौ चेद्यासन्निहितः स्यात् तदा समाप्यचं समारम्भः पण्डः स्यादिति शङ्कां परिहरति नाशङ्किष्ठा इति । ननु भोः तत्स्थलीषु तासु भूमिषु रघुवरस्यराघवेन्द्रस्य असन्निधिम् । अनवस्थानं तथा अस्मिन् दौत्य कर्मनि स्वस्य आत्मनो दृढपरिकरस्य एकान्तसमारम्भस्य उत्साहस्य च षण्डताः । निष्फलताश्च नाशङ्किष्ठा नाकलय । भवेत् परिकरो व्रूते पर्यङ्कपरिवारयो प्रगाढ़गात्रिकाबन्धे विवेकारम्भयोरपीति विश्वः । हेतुमाह हि यतो अर्थे वस्तुनि । अर्थोऽभिधेयो वे वस्तुप्रयोजननिवृत्तिष्वित्यमरः । अनिर्णीते निर्णयमप्राप्ते सति जनो झटिति विलम्बनमत्वा वैमुख्यं तद्विषयपराङ्मुखत्वं न याति न प्राप्नोति न वा पौरुषाढ्यः प्रशस्तपुरुषकारयुक्तः । अथाढ्यस्तु युक्ते बहुधनेऽपि चेति शब्दाब्धिः । साहसैर्बलात्कारकृतकार्यैरात्मत्यागैरिति यावत् । साहसस्तु बलात्कारकृतकार्ये इति विश्वः ।

तद्वयचैवं गमयति समं वासरानङ्गभारै-
र्मुञ्चत्यश्रूण्यपि सह सुखैः सोऽनुजातद्वितीयः।
तस्मिन् दूरात् प्रथममधुना वर्द्धसे वीर दिष्ट्या
सीताऽभ्यासादहमुपगतस्त्वामिति व्याहरोच्चैः॥ ७०॥
इत्थं क्लिष्टं भुजगमिव तं स्वैरमुज्जीवयेथा
अन्तर्गूढप्रचलितमहाक्रोधहालाहलोग्रम्।
त्वाम्त्वापन्नं सुहृदुपहृतापूर्वसन्देशगर्भम्
दीनोरत्नोदरमिव घटं सोऽभिनन्दिष्यति द्राक्॥ ७१॥

आपत्पातं पतितामापदं प्रशमयति निवारयति आत्मत्यागे सहसपट-प्रयोगो बहुशः श्रूयते यथा जलप्रवेशोचानन्दं प्रमोदं वह्निसाहसीति। दशकुमारचरितेपि सा तु पर्यश्रुमुखी समभ्यधात् मास्मनाथ मत्कृते अध्यवस्यः साहसमित्यादि॥ ६८॥

तद्वचेति। तदेव यत्र प्रदेशे अनुजातो लक्ष्मण एव द्वितीयो यस्य स लक्ष्मणमात्रसहित इत्यर्थः। स रघुपतिरङ्गभारैरङ्गानां गौरवैः समं सह। समं सहेत्यमरः। वासरान् दिवसान् गमयति क्षपयति अङ्गभारान् वासवांश्च गमयतीत्यर्थः। अपि तथा सुखैः सह अश्रूणि नयनसलिलानि मुञ्चति जहाति सुखान्यश्रूणि च मुञ्चतीत्यर्थः। तस्मिन् दूरात् हे वीर! अधुना दिष्ट्या आनन्देन वर्द्धने। दिष्ट्या समुपजोषञ्चेत्यानन्दे इत्यमरः। अहं सीताभ्यासात् सीतासदेशात्। सदेशाभ्याससविधसमर्य्यादशवेसवदित्यमरः। त्वामुपगत इति प्रथममादौ उच्चैर्व्याहरभाषस्व॥ ७०॥

इत्थमिति। इत्थमिदं प्रकारेण उच्चैर्व्याहृतेन क्लिष्टं कथमपि दैवयोगात् प्राप्तदौःस्थ्यावस्थं तथा अन्तर्मध्ये गूढेन गुप्तेन अनभिभावेनानाविष्क्रियमाणेनेति भावः। सुतरां प्रचलितेन तर लतामापन्नेन महाक्रोधेन हालाहलेन गरलेन च पक्षे महाक्रोधरूपहालाहलेन उग्रं भीषणं भुजगं सर्पमिव तं राघवं स्वैरः मन्दं मन्दं उज्जीवयेथा प्रत्यनीतजीवितं कुर्य्याः। मन्दस्व-

अर्व्येणात्त शिशिरितवपुर्निर्दयञ्चोपगूढ-
स्तेन स्वान्तान्तरजकुतुकाच्चञ्चलैः स्वप्रतीकैः ।
किञ्चिल्लीलाञ्चितकिशलयैः शाखिभिर्दृष्टपुष्पः
शान्तान्वेषश्रम इति भवांस्तत् पुरस्तात् ब्रवीतु ॥७२॥
लङ्कामम्भोनिधिपरिगतां राक्षसेशेन नीता
वीरत्वेणा तव सहचरी विप्रयोगाञ्ज्वलन्ती ।
मालिन्यं वहति च दशाशेषतान्तस्य नूनं
स्वर्गादेष्यल्लघुचपलवस्तत्ज्वालादीपिकेव ॥७३॥

च्छन्दयोः स्वैरमित्यमरः । स च सोऽपि राघवः दीनोदरिद्रो रत्नाकरदरे अभ्यन्तरे यस्य स तं घटं कुशानिव सुहृदा त्वयाहृतोऽर्पितो अपूर्वः । प्रागप्रान नन्द इव संवादो यस्य स तथाभूतं आपन्नं प्राप्तं त्वां द्राक् द्रुतं अभिनन्दिष्यति अभिमुखीकृत्य आनन्दं गमिष्यति ॥ ७१ ॥

अर्व्येणेति । अन्ते पश्चात् तेन राघवेन अर्घ्येण करणेन शिशिरितं शीतलीकृतं वपुः शरीरं यस्य स तथोक्तः तथा स्वान्तान्तरे मनोमध्ये जायत इति स्वान्तान्तरजम् । स्वान्तं हृन्मानसं मन इत्यमरः । तच्च तत् कुतुकं श्रवणकुतूहलञ्चेति स्वान्तान्तरज कुतुकम् । कुतुकञ्च कुतूहलमित्यमरः । तस्मात् हेतोश्चञ्चलैर्लोलैः स्वप्रतीकैः स्वाङ्गैर्निर्दयं गाढं यथास्यात्तथा उपगूढ आलिङ्गितश्च । परिरम्भः परिष्वङ्गः संश्लेष उपगूहनमित्यमरः । तथा किञ्चिदीषल्लीलाञ्चितानि चञ्चलानि किशलयानि पल्लवा येषां तथोक्तैः । पल्लवोऽस्त्री किशलयमित्यमरः । शाखिभिस्तरुभिर्दृष्टानि विकीर्णानि पुष्पानि यस्मिन् स तथोक्तः सन् शान्तोऽपगतो अन्वेषश्रमः अन्वेषणपरिश्रमो यस्य स भवान् तत् पुरस्तात् रघुपतेरग्रे इति वक्ष्य-माणं ब्रवीतु कथयतु ॥ ७२ ॥

लङ्कामिति । वीरेत्यामन्त्रणपदमनुषज्यते । राक्षसेशेन रावणेन अम्भांसि जलानि निधीयन्तेऽस्मिन्निति अम्भोनिधिस्तेन अम्भोनिधिना

रक्षोगेहे विनिहितमहारत्नसारैकरम्ये
रागस्तस्या अणुरपि मया नोपलब्धो वराक्याः।
यत् स्वाङ्गेनाप्यधरचरणेनोच्यते त्वद्वियोगा-
न्मुक्तालक्तद्रवरसतया सौख्यवैराग्यमस्याः॥ ८७॥

सागरेण परिणतां वेष्टितां लङ्कां राक्षसपुरीं नीता प्रापिता अतो विप्रयोगात् भवद्विरहात् ज्वलन्ती व्यथमाना एषा तव सहचरी सहधर्म्मचारिनी सीता जीवती प्रातिव्रत्यं साध्वीधर्म्मञ्च वहति बिभर्त्ति अस्य रावणस्य स्पर्शात्तु अहह खेदे। अहहेत्यद्भुते खेद इत्यमरः। पयसस्तोयस्य स्पर्शात् दीपिकेव अल्पादीपशिखेव नूनमवश्यं तत्क्षणात् दशाशेषतां दशानां वाल्यादीनां शेषो अन्तो यस्याः पक्षे दशावर्त्तिकैव शेषोऽवशिष्टा यस्यास्तद्भावं निधनं पक्षे निर्वाणं एष्यति यास्यतिम्। दशावर्त्तावबस्थायां वस्त्रान्तेस्युर्दशा अपि इति विश्वः॥ ७२॥

रक्षइति। हे सौम्य! विनिहितानि निवेशितानि यानि महारत्नसाराणि महार्घमणिवराणि तैरेकरम्ये अद्वितीयरमणीये। सारो बले स्थिरांशे च न्याय्ये क्लीवं वरेत्रिष्वित्यमरः। रक्षोगेहे रावणगृहे तस्या वराक्याः शोचनीयायाः सीताया इति यावत्। वराकः शङ्करे पुंसि शोचनीयेऽभिधेयवदिति मेदिनी। अणुरपि स्वल्पोऽपि रागोऽनुरागो मया नोपलब्धः नानुभूतः। रागोऽनुरागे मात्सर्य्ये इति विश्वः। हेतुमाह यत् यस्मात् त्वद्वियोगात् तव विरहात् स्वाङ्गेनावयवेनापि अस्याः सीतायाः अधरौ च चरणौ च एतेषां समाहारः अधरचरणम्। प्राणितूर्य्यसेनाङ्गानामैक्य च इति व्याख्यात्सूत्रेण ऐक्यम्। तेन अधरचरणेन मुक्तः परिहृतो अलक्तद्रव्यस्य लाक्षारसस्य रस आस्वादो येन तत् रसो गन्धरसे स्वादे इति विश्वः। तथा भूततया वैराग्य विगतो रागो रक्तिमा पक्षे अनुरागो यस्य तद्भावो विरागता उच्यते व्यज्यते। रागः क्लेशादिके रक्ते इति शाश्वतः। अङ्गानां वैराग्यात् सुतरामङ्गिनोऽपि वैराग्य सम्भवतीति भावः। अलक्त-

सा सिञ्चन्ती नयनसलिलैर्बाहुमूलं कदाचित्
त्वां पश्यन्ती नखरलिखितं कर्हिचिद्भूमिपृष्ठे ।
जातु व्यक्तं खलसदद्वादृष्टदोषं लपन्ती
दुःस्था कालं नयति रजसि व्यालुठन्ती क्वचिच्च ॥७५॥
त्वय्यासन्ने प्रणयिनि वनेष्विङ्गुदीस्नेहवद्भि
र्योधम्मिल्ले तनुरपि गुणो निर्मितो केशपाशैः ।
नोपैचिह स्वयुपरचनां नाम सैवाधुनात्माम्
वेणीसेवां कलयति सदा शैलवद्भारभूताम् ॥७६॥

कादित्यागन्तु क्रीड़ां शरीरसंस्कारं समाजोत्सवदर्शनम्। हास्यं पर-गृहे यानं त्यजेत् प्रोषितभर्तृका इति गरुड़पुराणे देशान्तरस्थभर्तृकानाम् शरीरसंस्कारनिषेधात् ॥ ७४ ॥

सा सिञ्चन्तीति । सा दुःस्था कदाचित् नयनसलिलैरश्रुभिर्बाहुमूलं सिञ्चन्ती कर्हिचित् भूमिपृष्ठे फलकाभावादिति भावः। नखरेण नखेन लिखितं वर्णवर्त्तिकाद्यभावादिति भावः। त्वां पश्यन्ती। एतेन विरह-विनोदनमुक्तम्। यथाह वियोगावस्थासु प्रियजनसदृशानुभवनं ततश्चित्रं कर्म्म स्वपनसमये दर्शनमपि। तदङ्गस्पृष्टानामुपगतवतां स्पर्शनमपि प्रती-कारोऽनङ्गव्यथितमनसां कोऽपि गदित इति। जातु कदाचित् खलसद इव खलानां सभवे। स्त्रीनपुंसकयोः सद इति सभापर्य्यायेऽमरः। व्यक्तं यथास्यात्तथा अदृष्टदोषं अदृष्टस्य जन्मान्तरकर्म्मणो दोषं पक्षे अदृष्टं अनालोकितं दोषं कल्पितमिति यावत्। लपन्ती व्याहरन्ती। अदृष्टं प्राग्जन्मकर्म्माग्न्यादिभीत्योर्नपुंसकम्। अवीक्षिते त्रिष्विति शब्दाब्धिः। क्वचिच्च रजसि धूलौ व्यालुठन्ती शयाना सती कालं नयति गमयति ॥ ७५ ॥

त्वय्यासन्न इति। तनुरपि कृशापि। गुणादीत इति विकृतिल्पत्वान्नेष्। या सीता प्रणयिनि प्रेयसि त्वयि आसन्ने निकटवर्त्तिनि सति वनेषु

स्नेहोद्रिक्त्यै तदनु मदुपन्यस्तवाक्यानि धारा-
यन्त्रेणेव प्रश्वसनसलिलानीतरावर्जितानि।
उन्नीर्यन्तीं स्वमुखविवरेणालमायुष्मतोक्ता
राजेन्द्र त्वामिदमशरणा साश्रुसाहेति सीता ॥७७॥

इङ्गुद्यास्तापसतरोः स्नेहबद्भिस्तैलवद्भिः तत्फलजाततैलस्निग्धैरिति यावत्। स्नेहोऽनुरागे चैक्कणे तैलेऽपि च निगद्यत इति धरणिः। केशपाशैः केशकलापैः। पाशः पक्षश्च हस्तश्च कलापार्थाः कचात् परे इत्यमरः। निर्म्मिते कृते गुरौ महति धम्मिल्ले केशबन्धविशेषे। धम्मिल्लः संयताः कचा इत्यमरः। स्रगुपरचनां स्रजः पुष्पमाल्यस्योपरचनां नोपैचिष्ट आरभिया न परिजहार नाम सम्भावयामि सैव अधुना इदानीं अल्पां क्षुद्रां एकां वेणीं सदा शैलवत् पर्वतवत् भारभूतां भारमयीं कलयति गणयति। क्रीडां शरीरसंस्कारं समाजोत्सवदर्शनमित्यादिना शरीरसंस्कार-प्रतिषेधात् विष्णुधर्मोत्तरे न सा तु विधवावेशं कदाचिदपि धारये-दिति वैधव्यलक्षणनिषेधाच्च देशान्तरस्थपतिकानामेकवेणीधारणसमा-चारः ॥ ७६ ॥

स्नेहोद्रिक्त्यै इति। हे श्वसन तदनु अनन्तरं हे राजेन्द्र अशरणा नास्ति शरणः रक्षिता यस्याः सा। शरणं गृहरक्षित्रोरित्यमरः। सीता त्वां साश्रु अश्रुणास्रुणासहितं यथास्यात्तथा इदमाह इत्युक्ता रोदन-श्चास्रमश्रुचेत्यमरः। स्नेहोद्रिक्त्यै स्नेहस्य प्रेम्न उद्रिक्त्यै उद्रेकाय प्राव-ल्याय इति यावत्। मदुपन्यस्तवाक्यानि मदभिहितवाक्यानि इतरावर्जि-तानि अन्येन प्रक्षिप्ताणि सलिलाणि तोयानि धारायन्त्रेण फुयारा इति प्रसिद्धेन जलोद्गमयन्त्रेणेव आयुष्मता आयुः प्रशस्तिमता भवतेति यावत्। स्वमुखविवरेण निजास्यरन्ध्रेण करणेन अलं पर्य्याप्तं उन्नीर्यन्ताम्। अलं भूषणपर्य्याप्तिशक्तिवारणवाचकमित्यमरः। मद्वाक्यानि अविकलमेव प्रत्युक्तामित्यर्थः ॥ ७७ ॥

रत्नाधारे परमशिशिरे शेषभोगोचितं य-
न्निद्राकाले मृदुकरतया यन्मयैवानुवृत्तम् ।
सोढं यच्च क्षममिह शिलाभूतलोत्तापजालं
तत्तेनाथाद्भुतविलसितं पादपद्मं नमामि ॥७८॥
का शुश्रूषाऽघटत न चिराकाङ्क्षितापि त्वदङ्घ्रे-
रेकभ्रान्त्या त्वजनि रजनीचारिसम्राभिरिष्टा ।

रामस्यातिवक्तव्यानि वाक्यान्याह रत्नाधार इत्यादि। तत्रादौ प्रणमति। हे नाथ! यत् पादपद्मं परमशिशिरे अतिशीतले रत्नाधारे रत्नस्य समुद्राधारे नागशयासने इति यावत् अशेषभोगेषु निखिलसुखेषु उचितं न्याय्यं तदहमिति यावत्। भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययोरित्यमरः, तथा निद्राकाले निद्रोपक्रमे मृदुकरतया कोमलपाणितया। मृदू चातीक्ष्णकोमलावित्यमरः। यत् मयैव अनुवृत्तं शुश्रूषितम्। तथा इह इदानीं शिलानां भूतलस्य च उत्तापजालं उत्तापसमूहं सोढुञ्च यत् क्षमं शक्तम् अतएव अद्भुतविलसितम् आश्चर्यलीलं ते तव तत् पादपद्ममहं नमामि वन्दे। समीरणसमीपे भर्तुर्दैवत्वम् निह्नुवाना मैथिल्यनयैवोक्त्या विष्णुपक्षमप्याहेत्यत्रायमर्थः। परमशिशिरे अतिशीतले रत्नाधारे रत्नानामाधारे जलनिधौ यत् शेषभोगोचितं शेषस्य अनन्ताख्यसर्पस्य भोगे काये उचितम् उपयुक्तं तथा निद्राकाले मृदुकरतया यन्मयैव अनुवृत्तम्। अत्र तु भवतु वा भर्तुरवतारतायां मम तु साभूदेव तत्प्रख्यापनौद्धत्यमित्यस्पष्टमाहमयेति। मया अनेन जनेन लक्ष्म्या वा इत्यर्थः। तुः शिवे मा रमायाञ्चेति विश्वः। तथा इह पृथिव्यां शिलाभूतलोत्तापजालं सोढुञ्च क्षमं तत् तवाद्भुतविलसितं पादपद्मं नमामि। तथाचोक्तं सुप्ते हरौ प्रकटशेषफणोपधाने लक्ष्मी-कराब्जपरिमार्जितपादपद्मे इति। अब्धौ शेषशयनादुत्थाय भगवतो नर-देहाश्रयणं शास्त्रेषु पुराणेषु काव्येषु च रघुवंशादिषु द्रष्टव्यम् ॥ ७८ ॥

तन्मन्तव्या बहु न स्पृशति द्वारमार्गानपि त्वा
नर्थोऽनर्थः सदय विवरेणोपयातीति वाचः ॥७९॥
रज्जुः कूपाद्धटमिव भुवं दुर्गतेर्दौर्गतीनं
स्वर्गद्वारं मनुजमिव च स्वीयसत्कर्मधर्मः।
उद्धृत्य त्वां नयतु झटिति स्नेहभारोऽतिबद्धं
दुःखाम्भोधेर्जनमिलषितः प्रार्थनैषा हताया: ॥८०॥
भग्नस्यापस्त्रिपुरजयिनो मार्गवस्यापि गर्वो
भग्नो लोकोत्सवविधिरपि स्वीयराज्याभिषेकः।

इदानीमात्मनिर्वेदमाह हेति। हा सदय चिराकाङ्क्षितापि चिराभिलषितापि त्वदङ्घ्रेस्तव चरणस्य शुश्रूषा परिचर्या नाघटत न अजनि एणभ्रान्त्या मृगभ्रान्त्या। एणः कुरङ्गमो रिश्यः स्यादृष्टसावलोचन इति शेषः। न तु राक्षसत्वप्रकारकप्रमात्मकबुद्ध्या इति भावः। इष्टा अभिलषिता रजनीचारिसम्प्राप्तिः राक्षसप्राप्तिस्तु अजनि जाता ममेतिशेषः। तत् तस्मात् अर्थः प्रयोजनं त्वान् स्वीयान् द्वारमार्गानपि न स्पृशति न स्पृशति अनर्थोऽप्रयोजनम् अनिष्टमिति यावत् विवरेण रन्ध्रेण उपयाति उपसर्पति इति वाचो बहु मन्तव्याः आदरणीयाः ॥ ७९ ॥

रज्जुरिति। रज्जुर्हीस अतिबद्धं आत्मना अतिशयेन बद्धं घटं कुम्भं कूपात् ध्रुवमिव भूतलं यथा एवं स्वीयसत्कर्मधर्मः स्वकृतसदनुष्ठानजातादृष्टम् अतिबद्धं समवायित्वादिति भावः। दुर्गतौ नरके तिष्ठन्तीति दौर्गतीनं नारकं मनुजं दुर्गतेर्नरकात्, नरको निरयो दुर्गतिः स्त्रियामित्यमरः। स्वर्गद्वारमिव स्वर्गद्वारं यथा स्नेहभारस्तव प्रेमसञ्चयोऽतिबद्धम् एकान्तमग्नत्वादिति भावः। इमं जनं मामित्यर्थः। इतोऽस्माद्दुःखाम्भोधेर्दुःखसागरात् उद्धृत्य झटिति द्रुतं त्वां नयतु प्रापयतु हताया मृतकल्पाया एषा प्रार्थना। इदानीमन्यत् किमपि न प्रार्थनीयमिति भावः॥ ८०॥

एते भग्नास्तदपि न हृतः किङ्करीत्वेऽहमङ्ग
स्नेनात्मानं कलयति भवत्प्रार्थ्यमानं जनोऽयम् ॥ ८१ ॥
आयाताया अपि दयित ते तामसीं दक्षिणस्या
मध्याक्रान्तां शमनवसतिं नारकद्वारपालैः ।
नश्यन्तो यद्भवति तदिहासीलभोगावशेषात्
स्पष्टं मन्ये हतकविधिनैवान्तकः प्रत्यषेधि ॥ ८२ ॥

भग्न इति । त्रिपुरं जयतीति त्रिपुरजयी स्थादेरिन्निति व्याख्यातसूत्रेण । तस्य हरस्येत्यर्थः । चापो धनुस्तया भार्गवस्य रैणुकेयस्य गर्वोऽहङ्कारोऽपि भग्नः, एवं स्वीय आत्मीयो राज्ये राजत्वे अभिषेकस्तथा लोकानामुत्सवविधिरुत्सवानुष्ठानञ्च भग्नः । एते भग्नास्तदपि तथापि किङ्कर्यां दास्या त्वमेति यावत् । नियोज्यकिङ्करप्रैष्यभुजिष्य परिचारका इत्यमरः । स्नेहस्य प्रेम्णो भङ्गो न जातस्तेन हेतुना अयं जनो अहमित्यर्थः । आत्मानं भवता प्रार्थ्यमानं कलयति गणयति अतएव प्रार्थय इति भावः । ८१ ॥

आयाताया इति । हे दयित हे स्वामिन् । दयितः स्वामिकान्तयोरिति धरणिः । दक्षिणस्यां दिशि तामसीं तमोगुणबहुलां तथा नारकद्वारपालैर्नरकदौवारिकैस्तद्वदति नृशंसत्वख्यापनाय तैरेवेति निर्दिष्टम् । अध्याक्रान्ताम् अधिकृताम् अतएव शमनवसतिं यमालयम्, वसती रात्रिवेश्मनोरित्यमरः । यमालयस्यापि तल्लक्षणत्वादिति भावः । यथा भविष्यपुराणम् याम्यं तमोमयं घोरं स्थानं प्राप्य नराधमाः । तिष्ठन्ति नरके घोरे न परिज्ञानचेतस इति । आयाताया आगताया अपि मे यदन्तो मृत्युर्न भवति । अन्तो नाशोद्वयोर्मृत्युरित्यमरः । तत् तस्मात् इह अस्मिन् लोके आसीलानां कष्टानाम् स्यात् कष्टं कृच्छ्रमाभीलमित्यमरः । भोगस्य अवशेषात् शेषसद्भावात् हतकविधिनैव दुर्नियत्यैव । नियतिर्विधिरित्यमरः । अन्तकोऽन्तकृत् शमनः प्रत्यषेधि प्रतिषिद्धः । इति स्पष्टं मन्ये असन्दिग्धं जानामि ।

बाल्यान्नाथ प्रभृति भवता स्वीकृतो लालितश्च
प्रेमैकान्तं गुणमहिमभिर्लम्भितो यः करो मे ।
मूर्खो वज्रोजितशतशिलापट्टकं सोऽधुनाऽयं
मत्सम्बन्धादिदमितिरुषेवाहते नाथहीनः ॥८३॥

तर्कोऽयं मे भवदपरतोऽदृष्टिसङ्कोचनाभ्यां
म्लानेनाभ्यां सततनिपतद्वाष्पविन्दूत्कराणाम् ।
किं स्यन्दन्ते प्रियविरहजा दुःखधारा उताहो
विख्यायाता इतरविषया एव तापाद्विलीनाः ॥८४॥

अत्रायं भावः । ऐहिककष्टभोगो विध्यधीनः । नाशस्तु गमनाधीनः । तत्र ऐहिकदुःखभोगकालावशेषे गमनक्रियायां सत्यां विधिर्विप्रलब्धः स्यादिति विधिनैव मत्क्रियाकालमध्ये न त्वया ग्रहीतव्या इति गमनो निषिद्ध इत्येव सम्भवतीति ॥ ८२ ॥

बाल्यादिति । हे नाथ ! बाल्यात् शैशवात् प्रभृति भवता स्वीकृतो गृहीतो लालितोऽत्यादृतश्च मे मम यः करो गुणमहिमभिः स्वगुणमाहात्म्यैः एकान्तं प्रेम लम्भितः प्रापितः । अस्त्रवेदविदयं मरुत्वता शैलवासमनुनीय-लम्भित इति वत् प्राप्त्यर्थानामपि गत्यर्थान्तर्गतत्वादण्यन्तकर्त्तुरत्र-कर्मत्वम् । सोऽयं मूर्खः करोऽधुना इदानीं नाथहीनो नाथेन त्वया रहितः सन् मत्सम्बन्धात् मम सम्पर्कात् अर्थात् मम पाणिरित्यस्माद्धेतोरिदं स्वामिवियोगदुःखं भवतीति रोषः इति रुषा एवं क्रोधेनेव । रुट्क्रुधौ स्त्रियामित्यमरः । जिताः कठिनतया पराजिताः शतं शिलानां पट्टाः पेषणफलकानि येन तत् । एवं भर्त्तृविरहदुःखादपि यन्न विदीर्णमिति भावः । पट्टः पेषणपाषाणे इति मेदिनी । एतद्विशेषणं पाणेर्मूर्खत्वे हेतुः । हन्ति आहते ताड़यति ॥ ८३ ॥

तर्कोऽयमिति । सततं निपततां स्यन्दमानानां वाष्पविन्दूनामश्रुविन्दूनां ये उत्कराः कूटाः । पुञ्जराशी तूत्करः कूटमस्त्रियामित्यमरः । तेषां

विभ्यद्विभ्यत् क्वचिदिव हृतं गूढमास्ते कदाचित्
याति स्थैर्य्यं न रणरणकाद्विक्लवञ्चेत एतत्।
तीर्त्वाम्भोधिं क्वचिदपि निजोदन्तमावेदयिष्यत्
त्वत्पादान्तं द्रुतसरु से याति किं कार्य्यमूढ़म् ॥८५॥
निद्रामल्पामपि घुरतरोद्रावयत्येव भीतिः
स्वप्नोपायैः कथमपि भवत्सङ्गमापादयित्रीम्।

व्याजेन छलेन आभ्याम् एताभ्यां भवदपरतो भवदितरेभ्योऽदृष्टिमिन्द्रजाल-दृष्टाभ्यां तेषां दर्शनात्तृप्तिमलभमानाभ्यामिति यावत्। लोचनाभ्यां नेत्राभ्यां किं प्रियविरहजा भर्त्तृर्व्विरहजाता दुःखधारा दुःखसन्ततयः धारा सैन्याग्रिमस्कन्धसन्तत्योरिति विश्वः। स्यन्तन्ते चरन्ति। उताहो किं वा। आहो उताहो किमुत विकल्पे किं किमूत च इत्यमरः। विम्बायाताः प्रतिविम्बेनागताः अश्रूणि पतिता इति यावत् तथा तापात् सन्तापात् विलीना द्रुता द्रवीभूता इति यावत्। विलीने विद्रुतद्रुताविल्यमरः। इतरविषया भवदतिरिक्तदर्शनीया एव स्यन्दन्ते अयं मे तर्कीवितकः। तद्विशेषेण वक्तुं न शक्नोमीति भावः॥ ८४॥

विभ्यदिति। अहह खेदे विभ्यद्विभ्यदतिभीतं मे मम एतच्चेतश्चित्तं क्वचित् कदाचित् हृतमिव गूढमन्यैरलक्ष्यमाणं सदास्ते तिष्ठति। कदाचित् रणरणकात् चिन्तातिशयात् विक्लवं विह्वलं सत्। विक्लवो विह्वल इत्यमरः। स्थैर्य्यं स्थिरतां न याति। अतिचञ्चलं भवतीत्यर्थः। क्वचिदपि किं कार्य्यं किं कर्त्तव्यमिति विषये मूढमनिश्चिन्वानं सत् अम्भोधिं समुद्रं तीर्त्वा उत्तीर्य्य निजोदन्तं स्वीयवृत्तान्तम्, स्वके नित्ये निजं त्रिष्विति वृत्तान्त उदन्तः स्यादितिचामरः। आवेदयिष्यत् विज्ञापयिष्यत् निवेदनाय इत्यर्थः। द्रुतं सत्वरं त्वत्पादान्तं तव चरणान्तिकं याति उपसर्पति। अन्तं स्वरूपे नाशे ना न स्त्री शेषेऽन्तिके त्रिष्विति मेदिनी॥ ८५॥

सौभाग्यं मे नियतमथवा तां हरन्नीरजिन्याः
सुप्तं रात्राविव सरसिजं क्वेह तत्सङ्गवार्त्ता ॥८६॥
अङ्गोपाङ्गैरहमहमिकापूर्व्वकं दर्श्यमानां
मानातीतां तदनुजनुषो बिभ्रतो भ्रातृभक्तिम् ।
उक्तीरेताः श्रुतिविवरयोर्लक्ष्मणस्यातिथित्वं
बाष्पैः स्नाता इव भृशमथ क्लेशहारिन्नयेथाः ॥ ८७॥
हा कारुण्यामृतजलनिधे हा महारण्यबन्धो

निद्रामिति । गुरुतरा भीतिः स्वप्नोपायैः स्वप्ना एव उपायास्तैः कथमपि अतिगोपनेन भवता सङ्गं संयोगम् आपादयित्रीं जनयिष्यन्तीम् शीलार्थे तृन्वर्जनान्न कर्म्मणि षष्ठी । अल्पामपि निद्रा सुद्रावयति दूरीकरोति। अथवा मम सौभाग्यं भाग्यवत्त्वं तां निद्रां हरत् ग्लङ्कृत् रात्रौ अम्भोजिन्याः पद्मलतायाः सरसिजं पुष्पमिव नियतं निश्चितं सुप्तं शयितं तयैव निद्रया सह शयितमित्यर्थः । इह इदानीं तत्सङ्गवार्त्ता तया निद्रया सङ्गस्य सम्बन्धस्य वार्त्ता क सुतरां तत् सम्बन्धो नास्तीति पूर्व्वार्द्धोभिहितमनुचितमिति भावः । एतत् पर्य्यन्तं रामस्यत्यभिहितम् ॥ ८६ ॥

अङ्गोपाङ्गैरिति । हे क्लेशहारिन् पवन अथानन्तरं बाष्पैर्नेत्रवारिभिर्भृशम् अत्यर्थं स्नाता इव एता वक्ष्यमाणा उक्तीर्भाषितानि । अङ्गानि हस्तादीनि उपाङ्गमङ्गुल्यादि तैः कर्त्तृभिः अहमहमिकापूर्व्वकं दर्श्यमानां प्रकाश्यमानां मानातीतामपरिमितां भ्रातृभक्तिं भ्रातरि ज्यायसि भक्तिं बिभ्रतः पुष्यतस्तदनु तदनन्तरं जनुर्जन्म यस्येति तदनुजनुषस्तदनुजस्य, जनुर्जननजन्मानीत्यमरः । लक्ष्मणस्य तन्नाम्नः श्रुतिविवरयोरातिथित्वं ग्राह्यत्वं नयेथाः प्रापय । एताउक्तीर्लक्ष्मणं श्रावयेत्यर्थः । अहमहमिका तु सा स्यात् परस्परं यो भवत्यहङ्कार इत्यमरः । इतराङ्गापेक्षया अहं साधुतरां भक्तिं दर्शयामीत्येवं रूपोऽङ्गानां परस्परमभिमानोऽत्राहमहमिका ॥ ८७ ॥

हा रक्षिन् हा सुविनयरसासृष्टवाञ्छान्तराळन्
हा सत्कर्मांविगणिततनूपात हा पक्षपातिन्
क्वेदानीं ते मदुपरि दयास्नेहदाक्षिण्ययत्नाः ॥८८॥
सन्तप्तायां मयि पथि भृशं मन्थरत्वं तवासीत्
वास्पोद्रेकस्तव मयि वने पाकधूमाकुलायाम्।
स्थैर्य्यं चेतोऽलभत रजनौ मत्सुषुप्तौ तवैत-
च्चित्रन्त्वाद्यां विपदि मम यत्त्वन्मनो नाकुलं स्यात्॥८९॥

हा कारुण्येति। कारुण्यमेवामृतं तस्य जलनिधिः सिन्धुः। हा तथाभूत। हा महारण्येषु बन्धो कृतसुहृत्कर्म्मन्। हा रक्षिन् विपत्सु रक्षाकृत्। सुविनयस्य रसेन द्रवेण आसृष्टौ लिप्तौ वाञ्छामन्तराळा च यस्य सः हा तादृश। शृङ्गारादौ विषे वीर्य्ये गुणे रागे द्रवे रस इत्यमरः। सत्कर्म्मणे मत्कार्य्याय अविगणितोऽशङ्कितस्तनूपातो देहपातो येन सः हा तथोक्त। हा पक्षपातिन् मदेकक्रियाभिलाषिन्। इदानीं ते तव मदुपरि मद्विषये दयास्नेहदाक्षिण्ययत्नाः क्व कुत्र गताः दाक्षिण्यं सारल्यम्, दक्षिणे सरलोदरावित्यमरः॥ ८८।

सन्तप्तायामिति। पथि वनागमनमार्गे मयि भृशमतिशयेन सन्तप्तायां रविकरैरुत्तप्तायां सत्यां तव मन्थरत्वं गतेर्मान्द्यम् आसीत्। मन्दगामी तु मन्थर इत्यमरः। एकत्र सन्तापोऽपरत्र मान्थर्य्यमित्यसङ्गतिरिवमुत्तरत्रापि। तथा वने पाकधूमैराकुलायां व्याकुलायां मयि सत्यां तव वास्पोद्रेकोऽश्रुसञ्चार आसीत्। तथा रजनौ रात्रौ मत्सुषुप्तौ ममातिनिद्रायाञ्च सत्यां तव चेतश्चित्तं स्थैर्य्यं स्थिरताम् अलभत अगमत्। सुषुप्तौ स्वमनस एव चाञ्चल्यनिवृत्तिरुचितेति भावः। तदुक्तं माण्डुक्योपनिषदि यदा सुप्तो न कञ्चन कामं कामयते न कञ्चन स्वप्नं पश्यति तत्सुषुप्तमिति। एतत्तु चित्रमाश्चर्य्यं यत् मम एतस्यां विपदि त्वन्मनस्तव मानसम् आकुलं न स्यात्। सर्वेषामेव

दोषास्पृष्टे तिमिरहरवद्धर्मसम्भूतिभूमौ
योऽभूत्तस्य त्वयि गुरुतरो मे दुरुक्त्यापराधः ।
अर्हस्येनं सदयहृदय क्षन्तुमेषोऽञ्जलिर्मे-
योषादोषान् प्रति हि विहितोऽनुग्रहः शास्त्रकृद्भिः ।९०॥
मामुद्धर्त्तुं कुरु परिकरं वैमुखं मा स्म यासी
खड्गच्छिन्ने त्वयि नयवन्नुन्नबाधं सहिष्ये ।
किन्तु द्वीपान्तर इह वधूर्नास्ति निर्वासनीया
जिह्वाच्छेदं त्वयि समुचितं पण्डिता दण्डमाहुः ॥९१॥

महतकारणानां त्वमसि फलभोक्ता सुतरां मद्विपद्यपि तव मनो व्याकुलता युता अतस्त्वद्दर्शनादाश्चर्यमिति भावः ॥ ८९ ॥

इदानीं स्वकृतापराधमास्मृत्याह दोषेति । हे वत्स ! तिमिरहरवत् भास्करवत् दोषास्पृष्टे दोषैः पापैः पक्षे दोषया रजन्या अस्पृष्टे: । दोषः स्याद्दूषणे पापे दोषा रात्रौ भुजेऽपि चेति विश्वः । तथा धर्म्मस्य पुण्यस्य पक्षे यमस्य सम्भूतिभूमौ उत्पत्तिभूमौ । धर्म्मः पुण्ये यमेपि चेति विश्वः । त्वयि दुरुक्त्या दुर्वचनेन मे मम यो गुरुतरो गरीयान् अपराधोऽभूत् । मारीचकृतरामार्त्तस्वरेण विह्वलीभावावसरे इति शेषः । हे सदयहृदय ! एनं अपराधं क्षन्तुं तितिक्षितुमर्हसि एष मे अञ्जलिः । अयं मयाञ्जलिः क्रियते इत्यर्थः । हि यस्मात् योषाया जोषितो दोषान् अपराधान् प्रति स्त्री योषिदवला योषेत्यमरः । शास्त्रकृद्भिर्मुनिभिरनुग्रहोविहितः कर्त्तव्यत्वेनाभिहितः । यथा शङ्खलिखितौ । अदण्ड्या माता पितरौ स्नातकपुरोहितौ परिव्राजकवानप्रस्थौ जन्मकर्म्मश्रुतशीलशौचाचारवन्तस्ते हि धर्म्मप्रतिकरा राज्ञः स्त्रीबालवृद्धास्तपस्विनस्तेभ्यः क्रोधं निजह्यादिति । कात्यायनः । बालवृद्धातुरस्त्रीणां न दण्डस्ताड़नं दम इति । ९० ॥

ननु गरीयानयमपराधः कथं क्षन्तव्यः स्यादित्याशङ्क्याह मामुद्धर्त्तुमिति । हे नयवन् नीतिकुशल मामुद्धर्त्तुमितः स्वस्थानं नेतुं परिकरं

न व्याहर्तुं वदनमधुना लज्जया सज्यमानं
माभूत् पृच्छा किमिति नितरां कुण्ठति स्वागसस्ते।
तच्चेद् व्रीडालवमपि दृशाऽधारयिष्यत् तदा प्राङ्-
नैवावक्ष्यत् सुनिपुण तथाऽनक्षराण्यक्षराणि ॥९२॥

समारब्धां गात्रिकाबन्धरूपां सज्जां वा कुरु। भवेत्परिकरः प्राते पर्य्यङ्कपरिवारयोः। प्रगाढगात्रिकाबन्धे विवेकारम्भयोरपीति विश्वः। वैमुख्यं विमुखतां मास्म यासीर्न गच्छ। मास्मेनयोर्व्यावृत्तिरिति टी। चेत् यदि तद्दण्डं तस्यापराधस्य दण्डं नयसि प्रापयसि ज्ञत्वेति शेषः तदा मुक्ताबाधं व्यथारहितं यथा स्यात्तथा। पीड़ा बाधा व्यथा दुःखमित्यमरः। सहिष्ये। तत्र न किमपि दुःखमनुभविष्यामीति भावः। नन्वयमेव दण्डो जातस्तत् किं न सहसे इत्याशङ्कायामाह किन्त्वित्यादि किन्तु वधूर्नवोढ़ा योषिदहम्। वधूः स्नुषा नवोढ़स्त्रीभार्य्यास्पृक्काङ्गनासु चेति विश्वः। इह द्वीपान्तरे निर्वासनीया निर्वासनार्हा। नास्ति तत् कोऽपरो दण्डोऽभिमत इत्यताह पण्डिता मुनयः मयि कृतागसीति शेषः। जिह्वाच्छेदं जिह्वाकर्त्तनं दण्डं समुचितं न्याय्यमाहुः। यथा हारीतः मिथ्यादूषिणां सेनकानां जिह्वां छिन्द्याद्दण्डयेद्वा सहस्रमिति। नारदोऽपि अनृताख्यानशीलानां जिह्वाच्छेदो विशोधनमिति ॥ ९१ ॥

लक्ष्मणम्प्रति वाक्प्रयोगे मुखस्य निर्लज्जतानिन्दां परिहरति न व्याहर्त्तुमिति। स्वागसः स्वकृतापराधाद्धेतोस्ते तव वदनं मुखम् अधुना इदानीं लज्जया सज्यमानं ससंपृच्यमानं सत् किं कथं व्याहर्त्तुं वक्तुं नितरामतिशयेन न कुण्ठति न मन्दीभवति हे सुनिपुण सुविज्ञ। प्रवीणे निपुणाभिज्ञविज्ञनिष्णातशिक्षिता इत्यमरः। इति पृच्छा एवं जिज्ञासा माभूत् भवेति शेषः। कथं नेत्यत आह चेद्यदि तद्वदनं दृशा चक्षुषा व्रीडालवमपि लज्जालेशमपि। मन्दाक्षं ह्रीस्त्रपा व्रीडेति लवलेशकणाणव इति चामरः। अधारयिष्यत् तदा प्राक् तदानीम् अनक्षराणि अवाच्यानि। अनक्षरमवाच्यं स्यादित्यमरः। तथा तादृशानि अक्षराणि वर्णान् नैवावक्ष्यत् नावक्ष्यदेव। अक्षरं ब्रह्मवर्ण-

सप्रत्याशं पुनरुपगमे जीवितं धारयन्त्यां
यद्येकान्तं मयि वत युवां निःस्पृहौ तन्न गोप्यम् ।
चेलं लग्नानलमिव समुत्सृज्य सद्योऽविषह्यम्
संजातापद्व्यतिकरमिदं जीवितं निर्वृतास्याम् ॥ ६३॥
एवं तावत् खलु हितकरीमाशिषं संप्रयासे
लब्धेऽन्यस्मिन् जनुषि च भवद्बन्धुभावौ लभेय ।
देहं लब्ध्वा पुनरपि यथा पद्मिनी शैशिरान्ते
तत् सौहार्द्दं दिनसिन्धिरयोः पौर्वमेकान्तमेति ॥६४॥

द्योरिति विश्वः । तथा व्याहृतवतीमुखस्य का लज्जावसर इति भावः ॥६२॥

अधुना हाविवोद्दिश्य लक्षणं प्रत्याह सप्रत्याशमिति । पुनरुपगमे पुनः समीपगमने सप्रत्याशं प्रत्याशया सहितं यथास्यात्तथा जीवितं जीवनं धारयन्त्यां वहन्त्यां मयि युवां यदि एकान्तं नितरां निःस्पृहौ निराकाङ्क्षी । इच्छाकाङ्क्षास्पृहेहातडित्यमरः । स्यातमिति शेषः । विवक्षातः कारकाणि भवन्तीति न्यायात् पुष्पे स्पृहा । तपोवनेषु स्पृहयालुरेषेत्यादिवत् स्पृहियाः योगे सप्तम्यत्र न चतुर्थी । अतएव कादम्बर्यां उत्तरगामी दृष्ट्वा च तं तादृशं निःस्पृहाम्यात्मनि परं भयमुपगतवती चेतस्यकरवमिति । तत् निःस्पृहत्वं न गोप्यं गोपनीयम् । तदा किं कार्य्यं त्वया इत्यत्राह चेलमित्यादि संजात आपद्व्यतिकर आपत्सम्बन्धो यस्मिन् तत् अतएव अविषह्यं सोढुमशक्यम् इदं जीवितं लग्नो अनलोवह्निर्यत्र तत् तादृशं चेलं वसनमिव चेलं वसनसंशुक-मित्यमरः सद्यस्तत्क्षणे समुत्सृज्य त्यक्त्वा निर्वृता सुखितास्याम् ॥ ६३ ॥

एवमिति । एवञ्चेत् तावत् तदा इमां वक्ष्यमाणां खलु आशिषमभिमतैति मतार्थं सम्प्रयासे प्रार्थये । यद्यपि आङ्पूर्वास्तु शसिङ् शासुङ् शासुलङ्ङाशिषि स्मृता इत्यनेन आङ्पूर्वस्यैव शासेराशीरर्थं नियच्छति कविकल्पद्रुमस्तथापि क्वचिदन्यपूर्वस्यापि सोऽर्थः प्रतिपत्तव्यः अतएवोत्तरचरिते इदं कविभ्यः

तामुत्लङ्घ्य प्रति निजपुरीं मन्थरां निर्विलम्बं
शोकान्मुग्धा मम च भगिनीर्बोधयेतं निवृत्तौ ।
वार्त्तालौल्यादथ कथमियं नागतोवाच किं वे-
त्याभिः पृष्टौ वनवदिति ताः श्रावयेतं प्रवीरौ ॥ ६५ ॥
आकौमारं जनकभवने यौवने भर्त्तृगेहे
परस्परक्रोधप्रसरविधिना लज्जितैकावरोधाः ।
सर्वा एव क्षणमपि वयं नान्वभूमाचिद्दुःखं
जातैषाद्यप्रस्थति खलु वः स्वप्नसाक्षावलोक्या ॥ ६६ ॥

पूर्वेभ्योनमोवाकं प्रशास्महे इति । प्रार्थनीयमाह लभ्य इत्यादिना अहं लभ्ये प्राप्ये अन्यस्मिन् जनुपि जन्मनि च भवद्बन्धुभावौ भवतोर्द्वयोर्बन्धुभावौ देवर-भर्त्तृभावौ लभेय प्राप्नुयाम् । यथा पद्मिनी पद्मलता शैशिरान्ते शिशिर-स्त्वपगमे माघफाल्गुणमासावसान इति यावत् । तपस्तपस्यौ शैशिरावृतु-रिति श्रुतेः । पुनर्वृहं लब्धापि दिननिहिरयोर्दिवसार्कयोः पौर्वं पूर्वकालीनं तत् एकान्तं परमं सौहार्द्दं एति प्राप्नोति तद्वदहमपीत्यर्थः ॥ ६४ ॥

अन्यदपि प्रार्थयति मामिति । मन्थरां मन्दगामिनीं तामुत्लङ्घ्य त्यक्त्वा निर्विलम्बमविलम्बं यथास्यात्तथा निजपुरीमयोध्यां प्रतिनिवृत्तौ परा-गतौ प्रवीरौ युवाम् । मन्थराया मे सहयोगादेव विलम्बसम्भव इति भावः । शोकात् मुग्धा मोहं गता मामदृष्ट्वेति शेषः । मम भगिनीर्माण्डवीप्रमु-खाश्च बोधयेतं बोधं नयेतम् । अथ वार्त्तालौल्यात् मद्वार्त्तायां विषये सतृष्णत्वात् अत्यभिलाषादिति यावत् । लोलश्चलसतृष्णयोरित्यमरः । इयं सीता कथं नागता किं वोवाच आभिर्भगिनीभिर्वल्लवन्निर्भरमिति पृष्टौ जिज्ञासितौ युवां ताः भगिनीरितिवक्ष्यमाणं श्रावयेतम् ॥ ६५ ॥

भगिनीनां श्रावयितव्यमाह आकौमारमिति । आकौमारं कौमार-मभिव्याप्य परिणयात् प्रागिति यावत् । जनकभवने पितृगृहे तथा यौवने

तत् कारुण्यं वितर नितरामत्र विश्वानुकम्पिन्
दम्पत्योर्नौ सवितर निशाकोकयोर्नभस्वन् ।
केशन्यस्तातिसुरभिरजोगन्धमीशाभिनन्द्यं
गन्धोद्वाहिन् धर च परमं प्रत्यभिज्ञानमेहि ॥९७॥
किं स्विद्वाच्यस्खलितवचनो वासतां दूषितत्वा-
न्नैतद्युक्तं तव किल सतां निर्विरोधा हि धर्माः ।

विवाहात् परं भर्तृगेहे पतिगृहेऽपि अस्तस्त्यक्तः क्रोधप्रसरः क्रोधवेगो येन स तादृशेन। प्रसरः प्रणये वेगे इति विश्वः। विधिना भाग्येन लम्भितः प्रापित एकोऽद्वितीयो अवरोधोऽन्तःपुरं याभिस्ताः। अन्तःपुरं स्यादवरोधनम्। शुद्धान्तश्चावरोधश्चेत्यमरः। तथोक्ता वयं सर्वा एव क्षणमपि अचिदुःखं अस्माद्दुःखमदर्शनजमिति यावत्। न अन्वभूम अनुभूतवत्यः अद्यप्रभृति खलु केवलमद्यप्रभृति एषा अहमित्यभिप्रायः। वोयुष्माकं स्वप्नालावलोक्या स्वप्नावसरसन्दर्शनीया जाता ॥ ९६ ॥

इदानीं पुनर्वातमभिदधाति तदिति। हे विश्वानुकम्पिन् तत् तावत् अत्र मदुपकारविषये नितरामतितरां कारुण्यमनुकम्पां वितर। देहि हे नभस्वन् निशायाः कोकयोश्चक्रवाकयोरिव वृत्तिः स्थितिर्ययोस्तथाभूतयोः अर्थात् वारिराशेरुभयकूलस्थित्या जातविरहयोः। कोकश्चक्रश्चक्रवाक इत्यमरः। नौ आवयोर्दम्पत्योः पतिपत्न्योः सम्बन्धे त्वं सवितर सवितेवाचर सूर्यवत् संयोजको भवेत्यर्थः। सवितृशब्दात् धानृङ्क्वौ इत्याचारार्थे क्विः तस्य च सर्वसापहारतो धातुसंज्ञायां सवितृ इति नाम धातोर्लोहिस्ततः शप्गुणहिलोपाः। तथा हे गन्धोद्वाहिन् एहि आगच्छ ईशाभिनन्द्यं भर्तुरभिनन्दनीयं केशन्यस्तातिसुरभिरजोगन्धं केशन्यस्तस्य केशेषु दत्तस्य प्राग्ज्ञेषः अतिसुरभिरजसः अतिसुगन्धिचूर्णस्य यो गन्धस्तद्रूपं परममुत्कृष्टं यतोऽधिकं न सम्भवतीति भावः। प्रत्यभिज्ञायते मदीयवाक्यत्वेन निश्चीयते अनेनेति प्रत्यभिज्ञानं संशयनिवारकमिति यावत्। धर गृहाण च ॥ ९७ ॥

मान्द्यं तस्मादिह परिहरन् सत्वरः सत्तवस्मा-
त्त्वञ्चाहञ्चाशुग युगपदेवोत्तराशां व्रजेव ॥९८॥
अन्यत्रस्थं सपदि नयतोऽप्यन्यभूमिं सुदूरां
श्रुत्वा पर्व्वान् प्रतिवचनतां गच्छतो मर्म्मरांस्ते ।
कृत्वाध्यायास्तासुखपरिणतेः शाकुन्तल्याः कथायाः
संवक्ष्याम्यग्रशिखरिणि तदलं विलम्बैस्तु प्रयाहि ॥९९॥

किमपि प्रतिवचनमनुपलभ्याह किञ्चिदिति । हे सत्तर अतिशयेन साधो अकृत वचनः अकृतवाक्प्रयोग त्वं किं स्वित् किं वामतासितद्विपरीततां मत्प्रार्थितविषयवैमुख्यमिति यावत् । वामौवल्गुप्रतीपयोरित्यमरः । यास्यसि प्राप्स्यसि दक्षिणत्वाद्धेतोः एतत्तव न युक्तं यस्मात् सतां साधूनां किल धर्म्मा निर्व्विरोधा अविरुद्धाः । दक्षिणस्य वामत्वे विरुद्धधर्म्मता स्यादिति भावः । तस्मान्मान्द्यं मन्दस्य भावमलसतां परिहरन् त्यजन् । मन्दस्तुन्दपरिमृज आलस्यः शीतकोलसोऽनुष्ण इत्यमरः । इह अस्मिन् कार्य्ये सत्वरस्त्वरयायुक्तः सन् भव हे आशुग त्वञ्च अहञ्च युगपदेव एकदैव उत्तराशां व्रजेव त्वञ्च उत्तराशामुदीचीं दिशं व्रजेः अहञ्च उत्तराशां भर्त्तुः प्रतिवाचनाकाङ्क्षां व्रजेयमित्यर्थः । उत्तरं प्रतिवाक्ये स्यादूर्द्धोदीच्योत्तमेऽन्यवत् । उत्तरस्तु विराटस्य तनये दिशिचोत्तरा इति । आशाककुभादिशोः प्रोक्ता इति च विश्वः । क्रियाकालयोरेकत्वे परस्मैपामिति नियमादस्मद्विभक्तिरेवात् ॥ ९८ ॥

अधुना पर्व्वध्वानिं प्रतिवचनमनुमायाह अन्यत्रेति । अन्यत्रस्थम् अन्यस्थानस्थं वस्तु सपदि तत्क्षणे सुदूरामनासन्नामपि अन्यभूमिं नयतो गमयतस्तेतव प्रतिवचनतामुत्तरतां गच्छतः प्राप्नुवतः पर्व्वान् पत्रसम्बन्धिनो मर्म्मरान् ध्वनीन् श्रुत्वा तथा अस्ताध्यवसितं असुखं दुष्मन्तवियोगदुःखं परिणतावुपसंहारे यस्याः सा तथाविधायाः अस्तं क्षिप्तेऽध्यवसिते इति मेदिनी । शाकुन्तल्याः कथायाः शकुन्तलाकथाया महाभारताभिज्ञानशकुन्तलादिप्रसि-

पन्थानोऽमी प्रतिगति शिवाः सन्तितो गच्छतस्ते
मूर्त्तावस्यां त्वयिकृतसदासन्निधानोऽष्टमूर्त्तिः ।
श्रमभ्रान्तिं तव परिहरेच्चानुकम्पी प्रणामा-
ज्ज्वाल्या भस्तं मम च जनयेद्दशावाहिमोक्षम् ॥१००॥

इति श्रीकृष्णनाथशर्म्मकृतिवातदूतः समाप्तः ॥

छाया इति यावत् । स्मृत्वा चिन्तयित्वा च । स्मृत्यर्थदयेशामिति कर्म्मणि षष्ठी । संत्रस्ता अतिभीतापि अहं आश्वसिमि आश्वासं प्राप्नोमि तत् तस्मात् विस्तरैर्वाग्विस्तारैरलं प्रभूतवाक्प्रयोगो मे विफल इत्यर्थः । विस्तारो विग्रहोव्यासः स च शब्दस्य विस्तर इत्यमरः । त्वं प्रयाहि गच्छ ॥ ९९ ॥

मङ्गलमाशास्ते पन्थान इति । इतो अस्मात् स्थानात् गच्छतस्ते तव प्रतिगति गतिं गतिं प्रति विप्सार्थोऽव्ययीभावः । अमी प्रागभिहिताः पन्थानः शिवा मङ्गलाः सन्तु । तथा अष्टौ चित्यादयोमूर्त्तयस्तनवो यस्य सोऽष्टमूर्त्तिः शिवस्त्वयि तत्स्वरूपायां अस्यां मूर्त्तौ वायोर्हरस्य मूर्त्त्यष्टकान्तर्भावादिति भावः । कृतं सदासन्निधानं सर्व्वदावस्थानं येन स तथाभूतः सन् तव श्रमभ्रान्तिं गतिश्रमञ्च परिहरेत् प्रतिवध्नातु । तथा अनुकम्पी सदयः सन् प्रणामाञ्जलिस्थामाशस्त्वं याचितम् । आङ्पूर्व्वस्य शंसतेरूपम् । वदसावात् रावणकृतावरोधात् संसाराच्च मम विमोचं मुक्तिञ्च जनयेदुत्पादयतु । अनुकम्पीत्यादिना सीता कविश्चात्मगतमाशास्ते इति बोध्यम् ॥ १०० ॥

सप्ताष्टसप्तशुभ्रांशु प्रमाणे शाकहायने ।
आषाढ़शुक्लसप्तम्यां टीकेयं पूर्णतां गता ॥
नवद्वीपासन्नभूमौ श्रीमद्भागीरथीतटे ।
ग्रामं पूर्व्वस्थलीं नाम विद्धि वासस्थलीं मम ॥

इति वातदूतटीका समाप्ता ॥ ० ॥